Anant Sharma
Hiremath

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१३८

व्याकरणमध्यमा

# सोत्तरा प्रश्नावली

( प्रथमं खण्डम् )

सम्पादकः—

पं० श्रीरामचन्द्रझा व्याकरणाचार्यः





चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला
१३८

# सोत्तरा प्रश्नावली

## संज्ञाप्रकरणादि-स्त्रीप्रत्ययान्ता

( प्रथमं खण्डम् )

सम्पादकः—
पं० श्रीरामचन्द्रझा व्याकरणाचार्यः



प्रकाशकः—
चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

सप्तमं संस्करणम् ] मूल्यं १-७५ [ ई० १९६३

लणसूत्रेऽकारश्चेति—अयं भावः—लणसूत्रे लकारोत्तरवर्तिह्रस्वाकारस्यानुनासिकत्वप्रतिज्ञया 'उपदेशेऽजनुनासिक इत्' इति सूत्रेणेत्संज्ञायां कृतायाम् 'आदिरन्त्येन सहेता' इत्यनेन अकारेण सहोच्चार्यमाणरेफस्य 'उरण् रपरः' इत्येतत्सूत्रघटकस्य 'हयवरट्'सूत्रस्थोऽयम् इतितत्त्वप्रत्यभिज्ञया मध्यपठितलकारस्वपदग्राह्यरेफयोर्बोधक इति रप्रत्याहारसिद्धिः। तेन तत्र सूत्रे रपरत्वविधानवत् लपरत्वविधानं, तेन च 'तवल्कारः' इति रूपसिद्धिर्भवति। ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगतत्वेन रप्रत्याहारे तद्ग्रहणस्यापि युक्तत्वादिति चेत्? न, 'अनुनासिकः' इति ककारपरक–इकारघटितनिर्देशेन प्रत्याहारेषु इत्सञ्ज्ञकवर्णाग्रहणज्ञापनात्। अन्यथा प्रत्यारेष्वित्सञ्ज्ञकवर्णानामपि ग्रहणे अचप्रत्याहारे 'ऋलृक्सूत्रस्थककारस्यापि ग्रहणापत्त्या तत्परकेकारस्य 'इको यणचि' इत्यनेन यणि 'अनुनासिक' इति निर्देशानुपपत्तेः।

हकारादिष्वकार उच्चारणार्थः (ई. ४९)—'लण्'सूत्रे एव अकारस्य इत्संज्ञकत्वे 'हयवरट्—' इत्यादौ पुनः पुनः अकारोच्चारणस्य किं प्रयोजनमिति प्रश्नाशयः। उच्चारणार्थत्वे मानन्तु 'नान्तरेणाचं व्यञ्जनस्योच्चारणं भवति' इति 'उच्चैरुदात्तः' इति सूत्रस्थभाष्यमेव। अत एव 'वर्णात् कारः' इति कारप्रत्यये सति 'ककार' इत्यादि सिध्यति।

हलन्त्यम् (ई. ४४)—ननु अष्टाध्याय्यामेकमेव 'हलन्त्यम्' इति सूत्रं पाणिनिना पठितं, तत्कथं कौमुद्यां तदावृत्तिरिति चेन्न, 'न विभक्तौ तुस्माः' इत्यादिसूत्राणां साफल्याय 'हलन्त्यम्' इति सूत्रस्य उपदेशेऽन्त्यं हल इत्स्यादित्यर्थोऽवश्यं वाच्यः। तथा च 'आदिरन्त्येन सहेता' इति सूत्रार्थं विना 'हलन्त्यम्' इति सूत्रार्थो न स्यात्। 'हलन्त्यम्' इति सूत्रार्थं विना च 'आदिरन्त्येन सहेता' इति सूत्रार्थो न स्यादिति द्वयोः परस्परापेक्षत्वेन अन्योन्याश्रयदोषात् 'हलन्त्यम्' इति सूत्रस्य उपदेशेऽन्त्यं हल् इत्स्यादित्यर्थासिद्धेः। तस्मात्तत्सूत्रावृत्त्या एकस्य हल्सूत्रान्त्यमित्स्यादित्यर्थो भवति, द्वितीयस्य च, उपदेशेऽन्त्यं हलित्स्यादित्यर्थो भवतीति न काप्यनुपपत्तिरिति दिक्।

आदिरन्त्येन सहेता (ई. ३३,६१)—आदिः अन्त्येन सह इता, इति पदविभागः। अत्र सूत्रे आद्यन्तशब्दाभ्यां मध्यगाः आक्षिप्यन्ते। 'स्वं रूपम्' इति सूत्रात् 'स्वम्' इत्यनुवर्तते। ततश्च—अन्त्येन इता सह उच्चार्य्यमाणः आदिः

( अण्, अच् इत्यादिरूपः ) मध्यगानां स्वस्य च प्रत्याहारसंज्ञेति सूत्रार्थो लभ्यते। उदाहरणं यथा—'अइउण' इति सूत्रघटकः 'अण्' इति। तत्र अन्त्येत्संज्ञकवर्णः 'ण' इति, तेन सह उच्चार्य्यमाणः आदिवर्णं 'अ-ण' इति, स च ( अ-ण' ) मध्यगानाम् ( इ, उ इत्यनयोः ) स्वस्य ( 'अ' इत्यस्य ) च बोधको भवति। ( एवमन्यत्राप्यूह्यम् )

'लण्' सूत्रस्थावर्णेन ( ई. ५५ )—'लण' सूत्रे तिष्ठतीति लणसूत्रस्थः स च असौ अवर्णश्च लणसूत्रस्थावर्णः तेन सह उच्चार्य्यमाणो रेफः 'र' इत्येवंरूपः रेफलकारयोः संज्ञेत्यर्थः। तेन 'र' प्रत्याहारसिद्धिः। अत एव 'उरणरपरः' इति सूत्रेण रपरत्वविधानवत् लपरत्वविधानेन 'तवल्कारः' इत्यादिसिद्धिर्भवतीति दिक्।

प्रत्याहारेष्वितां न ग्रहणम् ( ई. ४९ )—प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णाः यत्र स प्रत्याहारः, तेषु इत्संज्ञकानां वर्णानां न ग्रहणम्, 'उपदेशेऽजनुनासिक इत्' इति सूत्रे 'अनुनासिक' इति निर्देशात्। अन्यथा 'अच' प्रत्याहारे 'ॠलृक्' इति सूत्रस्थककारस्यापि ग्रहणापत्त्या तत्परके परे इकारस्य 'इको यणचि' इत्यनेन यणि 'अनुनासिक' इति निर्देशानुपपत्तेः।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ( ई. ४५ )—उश्च ऊश्च ऊ३श्च वः, वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यादित्यर्थः। ननु हलामर्धमात्रिकत्वेन वां काल इव कालाऽभावाद् व्यावर्त्याभावेन 'ऊकाले'ति सूत्रे 'अच्' ग्रहणं किमर्थमिति चेन्न, अजग्रहणाभावे 'प्रतक्ष्य, प्ररक्ष्य, इत्यादौ 'क्-ष' इति द्वाभ्यां मिलितस्य 'क्ष' इत्यस्य एकमात्रिकत्वेन प्रकृतसूत्रेण तस्य ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति तुक्' इत्यनेन तुगागमापत्तेः।

लृवर्णस्य द्वादश तस्य दीर्घाभावात् ( ई. ४३ )—अत एव 'अकः सवर्णे दीर्घः' इति सूत्रे 'होतृ+लृकारः इति स्थिते सवर्णदीर्घे कृते 'होतृकारः' इत्येवोदाहृतं भाष्ये। नचैवं लृवर्णस्य दीर्घाऽभावे 'ॠति ॠ वा' 'लृति लृ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रमिति ग्रन्थासङ्गतिरिति वाच्यम्, ताभ्याम् पूर्वद्विमात्रिकॠलृविधानस्य तत्रैव प्रतिपादितत्वात्।

[ तथा हि—तत्र आद्यस्य=ॠकारस्य, मध्ये द्वौ रेफौ तस्य एका मात्रा ( 'व्यञ्जनं चार्धमात्रिकम्' इति स्मरणात् ), अभितः=रेफद्वयस्य पुरस्तादुपरिष्टाच्च

विद्यमानयोर्ह्रस्वऋकारांशयोरन्या मात्रा, एवं द्वितीयस्य विधेयस्य ॠकारस्य मध्ये द्वौ लकारौ तयोः=लकारयोः, एका मात्रा, तावभितो विद्यमानयोलृकारांशयोरन्या मात्रेत्युभयत्र अपूर्वं द्विमात्रिकं विधानेन न ग्रन्थाऽसङ्गतिरिति दिक् ]

तुल्यास्य प्रयत्नं सवर्णम (ई. ५७, ६०)—तालुनः आदिस्ताल्वादिः (कण्ठ इति यावत् )। तालु आदिर्येषां तानि ताल्वादीनि, ताल्वादिश्च ताल्वादीनि च ताल्वादि। तत्ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादित्यर्थः।

आस्ये भवमास्यं ताल्वादिस्थानम्। प्रकृष्टो यत्नः प्रयत्नः। आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य ( वर्णजालस्य ) तत्तुल्यास्यप्रयत्नं परस्परं सवर्णसंज्ञकं स्यादिति भावार्थः। दैत्यारिः, श्रीशः, इत्याद्युदाहरणानि।

प्रक्रियादशायां तु विवृतमेव ( ई. ५३, ५६ )—अयम्भावः—दण्ड+आढकम् इति स्थिते अकारस्य आकारस्य च विवृतसंवृतप्रयत्नभेदेन सावर्ण्याभावात् सवर्णदीर्घो न स्यात् इति चेन्न, 'ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्, प्रक्रियादशायां ( शास्त्रीयकार्यप्रवृत्तिसमये ) तु ( ह्रस्वस्यावर्णस्य ) विवृतमेव' इत्यइउण् इति सूत्रे भाष्ये उक्तत्वात्। अयं च सूत्रकारस्यापि सम्मत इत्यत आह मूले 'अ अ' इत्यादि।

अचां के प्रयत्नाः—आभ्यन्तरप्रयत्ने अचां विवृतप्रयत्नम्, तत्रापि ह्रस्वस्यावर्णस्य प्रयोगे (साधनिकादशायाम्) संवृतप्रयत्नम् इति विशेषः। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां रामः, कृष्णः, इत्यादिशब्दानां प्रयोगे क्रियमाणे एव ह्रस्वस्यावर्णस्य संवृतमित्यर्थः। अत एव 'दण्ड+आढकम्' इति स्थिते अकाराऽऽकारयोः प्रयत्नसाम्यात् दीर्घत्वं सिद्धम्। बाह्यप्रयत्ने—अचां तु अल्पप्राणः, संवारः, नादः, घोषः इति चत्वारः प्रयत्नाः भवन्तीति तत्त्वविदः।

ह्रस्वग्रहणमतन्त्रम—'तस्यादित उदात्तमर्धह्रस्वम्' इति सूत्रे ह्रस्वग्रहणस्य 'उपेयिवान्' इत्यादिसूत्रे उपोपसर्गवद्विवक्षा न भवतीति ह्रस्वदीर्घप्लुतेषु सर्वत्रैव आदौ अर्धमुदात्तं भवतीति शेषमर्धं च अनुदात्तं भवति। अन्यथा दीर्घस्य यत्र स्वरितसंज्ञा स्यात् तत्रार्धमुदात्तं स्यात्, ह्रस्वप्लुतयोस्तु स्वरितसंज्ञायामर्धमुदात्तं भवतीति प्राञ्चः।

नाज्झलौ ( ई. ५४ )—आकारसहितोऽच् , आच् स च हल् चेत्येतौ मिथः सवर्णसंज्ञौ न स्तः, इत्यर्थः । तेन 'दधि+हरति, दधि+षष्ठम् , दधि+सान्द्रम्' इत्यादौ 'इको यणचि' इति यणादेशः, 'दधि+शीतलम्' इत्यादौ सवर्णदीर्घश्च न भवति । अन्यथा तेषां सावर्ण्याभ्युपगमे दीर्घादीनामिव हकारादीनामपि 'अणुदित्सवर्णस्य चाप्रत्ययः' इति सूत्रबलाद् अच्त्वं स्यादिति दिक् ।

अत्राण् परेण णकारेण—अत्र मानन्तु 'उरृत्' इति सूत्रे तकारोच्चारणम् । पूर्वेण णकारेणात्र 'अण' प्रत्याहारे तु ऋकारस्य अणप्रत्याहारे पाठाभावेन दीर्घऋकारादेरप्रसक्तौ तपरकरणं व्यर्थमेव स्यादिति तदेव व्यर्थं सत् 'अणुदित्–' सूत्रे अणप्रत्याहारः परणकारेणेति बोधयति । तपकरणाभावे तु 'अणुदित्–' सूत्रप्रवृत्त्या दीर्घऋकारोऽपि स्यादिति स्वांशे चरितार्थम् ।

अणुदित्सवर्णस्येति ( ई. ४१ )—प्रतीयते विधीयते इति प्रत्ययः । उत् इत् यस्य स 'उदित्' ( कु चु टु तु पु इत्यादिः ) । चकारात् स्वं रूपमित्यतः स्वमित्यनुवर्तते, तच्च षष्ठ्यन्ततया विपरिणम्यते । ततश्च—अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यादित्यर्थो भवति । अत्र सूत्रे एव 'अण' प्रत्याहारः परेण णकारेणेति भाष्याशयः ।

अणुदित्सवर्णस्येति किं विधीयते ( ई. ४१ )—अणमुद्दिश्य सवर्णग्राहकता अनेन विधीयते । 'वृद्धिरादैच्' इतिवदस्य संज्ञासंज्ञिभावबोधकत्वं तु न, समानाधिकरणपदोपादानाभावात् । एवं च 'येन विधिस्तदन्तस्य' इत्यत्र समानाधिकरणपदोपादानाभावात् तदन्तस्य स्वस्य च बोधकतैव विधीयते न तु संज्ञेति ।

'क-च–' ( ई. ४० )—'क-च' वर्णौ विवार-श्वास-अघोष-अल्पप्राण-प्रयत्नवन्तौ ।

'घ-झ' ( ई. ४० )—'घ-झ' वर्णौ संवार-नाद-घोष-महाप्राणप्रयत्नवन्तौ ।

'क' 'ह' ( ई. ४४ )—अनयोः 'अकुहविसर्जनीयानां कण्ठः' इत्यनेन कण्ठस्थानम् ।

'ठ'—इत्यस्य 'ऋटुरषाणां मूर्धा' इत्यनेन मूर्धास्थानम् ।

ऋ-इत्यष्टादशभेदाः ? टु इति टवर्गः । आ च, टुश्च, रश्च, षश्चेति—ऋटुरषास्तेषाम्—'ऋटुरषाणाम्' । 'कु चु टु तु पु' एते उदितः, तेन 'अणुदित्सवर्णस्य

चाप्रत्ययः' इत्यनेन सवर्णग्राहकतायां सत्यां— कु' इत्यनेन कवर्गस्य, 'चु' इत्यनेन चवर्गस्य, 'टु' इत्यनेन टवर्गस्य, 'पु' इत्यनेन पवर्गस्य च ग्रहणं भवति ।

घि-टीति ( ई. ४७ )—प्रकृतिभागस्य घिसंज्ञा, प्रत्ययमात्रस्य टिसंज्ञा, प्रकृति-प्रत्यययोः वृद्धिसंज्ञा, प्रकृतिमात्रस्य सम्बुद्धिसंज्ञा, प्रत्ययमात्रस्य भसंज्ञा अपृक्तसंज्ञा च, प्रकृतेरन्त्यालः पूर्ववर्णस्य उपधासंज्ञा, प्रत्ययमात्रस्य विभक्तिसंज्ञा सर्वनामस्थान-संज्ञा च । प्रकृतिप्रत्यययोः प्रगृह्यसंज्ञा भवति ।

एदैतोरोदौतोश्च न मिथः सावर्ण्यम् ( ई. ४८, ५१ )—अयम्भावः, ययोर्वर्णयोः स्थानप्रयत्नसाम्यं तयोः परस्परं 'तुल्यास्य–' इति सूत्रेण सवर्णसंज्ञा विधीयते । तथा च एकारस्य ऐकारस्य च उभयोः कण्ठतालुस्थानं विवृतप्रयत्नश्चेति तयोः, एवम् ओकारस्य औकारस्य च कण्ठौष्ठस्थानं विवृतप्रयत्नश्चेति तयोश्च परस्परं सवर्णसंज्ञा प्राप्नोति । तथा च ऋकारेण स्वसवर्णानां त्रिंशद् ऋकारऌकाराणां यथा ग्रहणं तथा एज्भिः स्वसवर्णचतुर्विंशतेर्ग्रहणमिति नापादनीयम् , तथा सति एकारेण ऐकारस्य औकारेण ओकारस्य च ग्रहणसिद्धेः 'ऐऔच' इति सूत्रं व्यर्थमिति तयोः परस्परमसावर्ण्यज्ञापनात् ।

एदैतोरोदौतोश्च ( ई. ४८, ५१ )—( प्रकारान्तरम् ) ननु 'तुल्यास्य-प्रयत्नं सवर्णम्' इति सूत्रेण एकारैकारयोः, ओकारौकारयोश्च सवर्णसंज्ञा कथन्नेति, चेन्न, 'ऐ औच' इति सूत्रारम्भसामर्थ्यात् । न च सूत्राऽभावे 'एचोऽ-यवायावः, इति सूत्रे प्रत्याहाराऽसिद्धिरिति वाच्यम् , 'एङोऽयवायावः' इति न्यास-करणेनादोषात् । एवं 'न य्वाभ्याम्–' इति सूत्रे ऐचः स्थाने 'ऐऔ' इति स्वरूपेणैव पाठ्याविति भावः ।

विश्वपाभिरित्यत्र ढत्वं कुतो नेति ( ई. ३४, ४२, ४५, ४८, ५२, ५९ )—अयम्भावः, 'पूर्वं वर्णानामुपदेशस्तदुत्तरकालेत्संज्ञा, इत्संज्ञोत्तरकाला प्रत्याहारसिद्धिः, तदुत्तरकाला सवर्णसंज्ञा, तदुत्तरं नाज्झलाविति निषेधः, तदुत्तरं ग्राहकताशक्तिः, एतेन सर्वेण समुदितेन अन्यत्र सवर्णानां ग्रहणं भवति न स्वस्मि-न्नापि स्वाङ्गे' इति भाष्योक्तरीत्या 'तुल्यास्यप्रयत्नं सवर्णम्' 'नाज्झलौ' इत्येताभ्यां प्राक् ग्रहणकशास्त्रस्य असिद्धया 'नाज्झलौ' इत्यस्य वाक्यार्थबोधावसरे अच्पदेन वर्णसमाम्नायस्थानां ह्रस्वानामेव ग्रहणात् तेषामेव सवर्णसंज्ञानिषेधेन 'विश्वपाभिः' इत्यत्र हकारेण आकारस्य ग्रहणात् 'हो ढः' इत्यनेन ढत्वं कुतो नेति चेन्न,

'नाज्झला'विति सूत्रे 'आसहितोऽच् इत्याच्' इत्याकारस्यापि सवर्णदीर्घेण प्रश्लिष्टत्वात् । अत्र प्रश्लेषे 'कालसमयवेलासु तुमुन्' इति सूत्रमेव मानम् । अन्यथा 'वेलासु' इत्यत्र ढत्वस्य संयोगान्तलोपस्य वाऽऽपत्तौ लकारादाकारस्य निर्देशा सङ्गतिः स्यादिति ।

विश्वपाभिः—( संक्षिप्तप्रकारः ) ननु 'तुल्यास्यप्रयत्नं सवर्णम्' इति आकारहकारयोः सवर्णसंज्ञायां सत्यां विश्वपाभिरित्यत्र 'हो ढः' इति ढत्वं कुतो नेति चेन्न, 'नाज्झला'विति निषेधात् । न च वर्णानामुपदेशस्तावदिति पञ्चमहावाक्येन 'नाज्झला'विति सूत्रविषये 'अणुदित्—' सूत्राप्रवृत्त्या 'नाज्झला'विति ह्रस्वाकारस्यैव सवर्णसंज्ञानिषेधो भविष्यतीति वाच्यम् , नाज्झलौ' इत्यत्र दीर्घाकारस्यापि प्रश्लिष्टत्वात् । प्रश्लेषे मानन्तु 'कालसमयवेलासु तुमुन्' इति सूत्रम् । अन्यथा तत्र षत्वापत्तिर्दुर्वारा स्यादिति तत्त्वविदः ।

तपरस्तत्कालस्य ( ई. ४५ )—अत्र 'तपर' इत्यावर्तते । प्रथमस्तावत् , 'तपरशब्दः तः परः यस्मादिति बहुव्रीहिः । द्वितीयस्तु तात्परः इति पञ्चमीसमासः । ग्रहणकशास्त्राद् 'अण्' इत्यनुवर्तते । तस्य तपरत्वेन उच्चार्यमाणवर्णस्य काल इव कालो यस्येति बहुव्रीहिः । एवं च—'अत्' 'इत्' इत्याद्यात्मकः अण् तपरत्वेन उच्चार्यमाणः स्वीयकालसदृशकालस्य संज्ञा स्यात्' इति सूत्रार्थः सम्पद्यते ।

स्वं रूपं शब्दस्याशब्दसंज्ञा ( ई. ३७,५१,५३ )—शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विनेति सूत्रार्थः । 'शब्दस्य स्वं रूपं संज्ञि, इत्येतावन्मात्रार्थस्योदाहरणं तु 'अग्नेर्ढक्' इति । अत्र अग्निशब्देन अग्निशब्दार्थस्य तत्पर्यायस्य = वह्निशब्दस्य वा ग्रहणं न भवति । शब्दशास्त्रे या संज्ञा तां विनेत्यर्थस्योदाहरणं तु वृद्धिगुणादिसंज्ञेति । अत्र वृद्धिगुणादिशब्दस्वरूपस्य ग्रहणं न भवति । किं च 'उपसर्गे घोः किः' इत्यत्र 'घु' इत्यनेन घुधातोर्ग्रहणं न भवतीति दिक ।

येन विधिस्तदन्तस्य ( ई. ५४ )—'येन' इति करणे तृतीया, करणस्य व्यापारवत्त्वनियमात् , अन्येषां च व्यापाराभावात् , विशेषणमेवात्र करणतृतीयान्तेन उच्यते । तस्य च इतरव्यावृत्तिकरणमेव व्यापारः, तच्च शब्दोपस्थितिविशेषस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्वचित् सति गमके अतादृशं शब्दरूपं विशेष्यमादाय अपि तदन्तविधिः । अत एव 'इन्हन्—' इत्यादिविषये तदन्तविधिः ।

विरामोऽवसानम् ( ई. ५३ )—विरम्यतेऽस्मिन्निति विरामः। यस्मिन् वर्णे उच्चारिते सति अव्यवहित्तोत्तरकाले वर्णान्तराणामुच्चारणाभाव सः अन्त्यवर्णः अवसानसंज्ञकः इत्यर्थः।

परः सन्निकर्षः संहिता ( ई. ४५,६० )—परः = अतिशयितः, सन्निकर्षः = अर्धमात्राधिककालव्यवधानाभावरूपसामीप्यम्। तदाह मूले—वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यादिति। उदाहरणं तु 'सुध्युपास्यः' इत्यादि बोध्यम्।

सुप्तिङन्तं पदम (ई. ४६,६०)—'सुप' इति 'स्वौजसमौट—' इति सूत्रे 'सु' इत्यारभ्य सुपः पकारेण प्रत्याहारः। सुप् च तिङ् च इति सुप्तिङौ तौ अन्ते यस्य तत् सुप्तिङन्तम्। अन्तशब्दश्च प्रत्येकं सम्बध्यते, तदाह मूले—सुबन्तं तिङन्तं च पदसंज्ञं स्यादिति। उदाहरणं तु 'रामः' इत्यादि बोध्यम्। तत्र हि 'राम स्' इति स्थिते प्रकृतसूत्रेण पदत्वात् 'ससजुषो रुः' इत्यनेन रुत्वे विसर्गः सिद्ध्यति।

सुप्तिङन्तं पदमिति सूत्रेऽन्तग्रहणं किमर्थम्—अयम्भावः, प्रत्ययग्रहणे तदन्ता ग्राह्याः, इति परिभाषया सुप्तिङोः प्रत्ययत्वेन तदन्तग्रहणे सिद्धे अन्तग्रहणं व्यर्थं सत् ज्ञापयति—'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति। तेन घसंज्ञा तरप्तमपयोरेव न तदन्तस्य। अतः 'गौरी ब्राह्मणितरा' इत्यत्र न ह्रस्वः इत्यवसेयम्।

दीर्घं च ( ई. ५४ )—अत्र सूत्रे 'संयोगे' इति नानुवर्तते। दीर्घमपि गुरुसंज्ञकमित्यर्थः। छन्दःशास्त्रे एवास्य विशिष्टोपयोगः।

इति संज्ञाप्रकरणम्।

---

## अथ परिभाषाप्रकरणम्

इको गुणवृद्धी ( ई. ४६ )—'इकः' 'इति षष्ठ्यन्तशब्दः स्वरूपपरः। उपतिष्ठत इति शेषः। वृद्धिरादैच् अदेङ्गुणः, इत्यतो वृद्धिरिति गुण इति चानुवर्तते। इतिशब्दोऽध्याहार्यः। यत्र विधीयते तत्रेत्यप्यध्याहार्यम्। ततश्च—'गुणो वृद्धिरित्युच्चार्य्य यत्र गुणवृद्धी विधीयेते तत्र इकः इति षष्ठ्यन्तं पदमुपतिष्ठते' इत्यर्थो भवति। 'सार्वधातुकार्धधातुकयोः, मिदेर्गुणः, इत्याद्युदाहरणम्।

अचश्च ( ई. ४५, ५३, ५६ )—'अचः' इति षष्ठ्यन्तशब्दः स्वरूपपरः । 'ऊकालोऽच्—' इत्यतः 'अच्ह्रस्वदीर्घप्लुतः' इत्यनुवर्तते । इति यत्र विधीयते इत्यध्याहार्यम् । तदाह मूले—'ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते' इति । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्याद्युदाहरणम् ।

स्थानेन्तरतमः (ई. ५३)—स्थानं प्रसङ्गः । अन्तरशब्दोऽत्र सदृशपर्यायः । अतिशयतोऽन्तरः अन्तरतमः । तदाह मूले—'प्रसङ्गे सति सदृशतम आदेशः स्यात्' इति । एकस्य स्थानिनः अनेकादेशप्रसङ्गे सति यः स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः स एव आदेशो भवतीत्यर्थः । अत्र स्थानशब्देन ताल्वादि स्थानं विवक्षितम् । गुणशब्देन प्रयत्नः । प्रमाणशब्देन एकद्विमात्रादिपरिमाणम् । तत्र स्थानतो यथा—दध्यत्र । अर्थतो यथा—तृज्वत्क्रोष्टुः । गुणतो यथा—वाग्घरिः । प्रमाणतो यथा—'अदसोऽसेर्दादुदो मः' इति ।

यत्राऽनेकविधमान्तर्यम् ( ई. ४६,५१ )—अस्याः परिभाषायाः किं प्रयोजनमिति चेच्छृणु—चेता, स्तोता, इत्यत्र 'पुगन्तलघूपधस्य च' इत्यनेन इकारोकारयोः स्थानत आन्तर्याद् एकारौकाररूपे गुणे प्राप्ते प्रमाणत आन्तर्याच्च अकाररूपे गुणे प्राप्ते 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' इति परिभाषया स्थानत आन्तर्यस्य बलवत्वात् एकारौकारौ स्त एवेति ।

आन्तर्यभेदाः के, कानि च तेषामुदाहरणानि ( ई. ५६ )—स्थानार्थगुणप्रमाणतश्चेति चत्वारः आन्तर्यभेदाः शब्दशास्त्रे प्रसिद्धाः । तत्र स्थानतो यथा—'दध्यत्र' इति । अत्र तालुस्थानस्य इकारस्य स्थाने तालुस्थानीय यकारो जातः । अर्थतो यथा—'पद्दन्नोमास—' इति । अत्र पादशब्दस्य पदादेशः । गुणतो यथा—'वाग्घरिः' इति । अत्र संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृश एव घकारः । प्रमाणतो यथा—अमुम्, अमू, अमून्, इत्यादि । अत्र 'अदसोऽसेर्दादुदो मः' इत्यनेन ह्रस्वस्य ह्रस्वः, दीर्घस्य च दीर्घ ऊकारः । इति ।

तस्मादित्युत्तरस्य ( ई. ५४ )—'उदः स्थास्तम्भोः पूर्वस्य' इत्यादि सूत्रगतपञ्चम्यन्तस्यानुकरणं तस्मादिति । इतिशब्दानन्तरं गम्येऽर्थे इति शेषः । निर्दिष्टे इत्यनुवर्तते । तदाह मूले—'पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम्' इति । द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्याद्युदाहरणम् ।

'अष्टाभ्य औश्' इत्यादौ 'आदेः 'परस्य' इति परिभाषा 'अनेकाल्-शित्सर्वस्य' इत्यनया कथं बाध्यते ? ( ई. ३० )—'अष्टा जस्' इति स्थिते 'अष्टाभ्य औश्' इति औश् प्राप्तः। स च 'तस्मादित्युत्तरस्य' इति परिभाषया अष्टन्शब्दाव्यवहितपरस्य प्राप्तः। तत्र अनेकाल्त्वात् सर्वादेशे प्राप्ते 'आदेः परस्य' इत्यनेन आदेरेव प्राप्ते, तत्र 'तुल्यबलविरोधे परं कार्यम्' इति परस्य प्राबल्येन 'अनेकाल्शित्सर्वस्य' इति सर्वादेशः।

स्वरितेनाधिकारः ( ई. ५५ )—स्वरितत्वप्रयुक्तं शब्दस्वरूपमधिकृतं बोध्यमित्यर्थः। यत् पदं शास्त्रकृता स्वरिताख्यस्वरविशेषविशिष्टमुच्चारितं तदुत्तरसूत्रेष्वनुवर्तनीयमिति यावत्। एतत्सूत्रप्रयोजनं तु बहुधा भाष्ये प्रपञ्चितम्।

परनित्येति—'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' परादीनां मध्ये पूर्वपूर्वापेक्षया उत्तरमुत्तरं शास्त्रं बलवत्तरमित्यर्थः। परापेक्षया नित्यान्तरङ्गापवादाः, नित्यापेक्षयापि अन्तरङ्गापवादौ, अन्तरङ्गापेक्षयापि अपवादः, इत्येवंक्रमेण पूर्वपूर्वापेक्षया उत्तरोत्तरबलवत्त्वमिति फलितोऽर्थः। परान्नित्यं यथा—'तुदति' इति। अत्र परमपि लघूपधगुणं बाधित्वा नित्यत्वाद् 'तुदादिभ्यः शः' इति शः। परादन्तरङ्गं यथा—'उभये देवमनुष्याः' इति। अत्र 'प्रथमचरम–' इति परामपि विकल्पेन प्राप्तां सर्वनामसंज्ञां बाधित्वा विभक्तिनिरपेक्षत्वेन अन्तरङ्गत्वात् 'सर्वादीनि–' इति सर्वनामसंज्ञा भवति। परादपवादो यथा—'दध्ना' इति। अत्र 'अस्थिदधि–' इत्यनङ् परमपि अनेकालिति सर्वादेशं बाधित्वा 'ङिच्च' इत्यपवादेन अन्तादेशः। नित्यादन्तरङ्गं यथा—'ग्रामणिनि कुले' इति। अत्र नित्यमपि 'इकोऽचि–' इति नुमं बाधित्वा 'ह्रस्वो नपुंसके–' इति अन्तरङ्गत्वाद्ध्रस्वः, प्रथमतः नुमि कृते तु अनजन्तत्वात् ह्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा—'दैत्यारिः' इति। परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद् 'आद्गुणः' इति गुणे प्राप्ते अपवादत्वात् सवर्णदीर्घः। इति दिक्।

अकृतव्यूहाः पाणिनीयाः ( ई. ५१ )—न कृतः अकृतः व्यूहः प्रकृतिप्रत्ययविवेचनं यैः ते अकृतव्यूहाः पाणिनिशिष्या इत्यक्षरार्थः। निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः। 'सेदुषः' इत्याद्युदाहरणम्।

इति परिभाषाप्रकरणम्।

---

# अथ अच्सन्धिप्रकरणम्

अचः परस्मिन्पूर्वविधौ ( ई. ५७ )—अच इत्येतदादेश इत्यनेनान्वेति, अच आदेश इति। परस्मिन्निति सति सप्तमी। ततश्च परनिमित्तक इति लभ्यते। तच्च आदेशविशेषणम्। विधीयत इति विधिः। पूर्वस्य विधिः पूर्वविधिः। तदाह— परनिमित्तोऽजादेशः स्थानिवत् स्यात् स्थानिभूदादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये, इति। 'सुध्युपास्यः' इत्याद्युदाहरणम्। तत्र हि 'सुधय् उपास्यः' इति जाते प्रकृत-सूत्रेण यकारस्य स्थानिवद्भावेन अच्त्वमाश्रित्य अच्परत्वेन 'अनचि च' इति द्वित्वस्याप्राप्तौ 'न पदान्त–' इति द्विर्वचने कर्तव्ये स्थानिवद्भावनिषेधो भवतीति। अलाश्रयविधावपि स्थानदिवद्भावार्थमिदं सूत्रमिति न विस्मर्तव्यम्।

'सुध्युपास्यः' इत्यत्र स्थानिवद्भावः कथं निरस्तः ? ( ई. ३७ )— 'सुधी उपास्यः' इति स्थिते 'इको यणचि' इत्यनेन स्थानत आन्तर्यादीकारस्य यकारे कृते 'अनचि च' इत्यनेन धकारस्य द्वित्वम्। अत्र शङ्कते—ननु 'स्थानिवदादेशोऽनाल्विधौ' इत्यनेन यकारस्य स्थानिवद्भावेन अच्त्वमाश्रित्य अच्परत्वेन 'अनचि च' इति द्वित्वं कथमिति चेन्न, 'अनल्विधौ' इति स्थानिवद्भावनिषेधेन अच्परत्वाभावात्। न च 'अचः परस्मिन् पूर्वविधौ' इति स्थानिद्भावेन अच्त्वं स्यादिति वाच्यम्, 'न पदान्त-' इति सूत्रेण द्विर्वचने कर्तव्ये स्थानिवद्भावनिषेधात्।

अदर्शनं लोपः ( ई. ५३ ) शब्दविषयकश्रवणमिह दर्शनम्, तस्याऽभावः अदर्शनम्। 'स्थानेऽन्तरतमः' इत्यतः स्थान इत्यनुवर्तते। स्थानं प्रसङ्गः। तथा च—शास्त्रतः शब्दस्य कस्यचिच्छ्रवणप्रसङ्गे सति यदश्रवणम्, तत् लोपसंज्ञं भवतीत्यर्थः। तदाह मूले—प्रसक्तस्यादर्शनं लोपसंज्ञं स्यादिति। 'सुद्धय् उपास्यः' इति स्थिते संयोगान्तलोपं शङ्कितुं लोपसंज्ञासूत्रमिदं विवक्षितम्।

सद्ध्युपास्यः ( ई. ४९ )—'सुधी उपास्यः' इति स्थिते 'इको यणचि' इति सूत्रेण स्थानत आन्तर्यादीकारस्य यकारे 'सुधय् उपास्यः' इति जाते 'अनल्विधा'-विति निषेधेन 'स्थानिवदादेशोऽनल्विधौ' इत्यस्य अप्राप्तावपि 'अचः परस्मिन् पूर्वविधौ' इति यकारस्य स्थानिवद्भावेन अच्त्वमाश्रित्य 'अनचि चे'ति सूत्रेण द्वित्वा-प्राप्तौ 'न पदान्त—' इति सूत्रेण द्विर्वचने कर्तव्ये स्थानिवद्भावनिषेधेन अच्परत्वाऽभावात् दित्वे जाते 'झलां जश झशि' इति पूर्वधकारस्य दकारे 'सुद्ध्युपस्यः' इति

सिद्धम् । 'संयोगान्तस्य लोपः' इत्यनेन यकारस्य दर्शनाभावरूपलोपस्तु न 'यणः प्रतिषेधो वाच्यः' इति वार्तिकेन तन्निषेधात् । ( विदुषामुपासनीयो गणेश इत्यर्थः ) ।

लाकृतिः ( ई. ५३ )—लृवर्णस्य आकृतिरिव आकृतिर्यस्य सः । 'लृ आकृति' इति स्थिते 'इको यणचि' इत्यनेन दन्तस्थानसाम्यात् लृवर्णस्य लकारे "लाकृतिः' इति सिद्धम् ।

पुत्रजग्धी ( ई. ५४ )—'पुत्र जग्धी' इति स्थिते 'वहतजग्धयोः' इति वार्तिकेन विभाषया द्वित्वे 'पुत्त्रजग्धी' इति । द्वित्वाऽभावे 'पुत्रजग्धी'ति । 'अनचि चे'ति द्वित्वविकल्पे सिद्धे क्तान्ते परे पुत्रशब्दस्य यदि द्वित्वं तर्हि हतजग्धयोरेव, आक्रोशे एवेति नियमार्थमिदमिति तत्त्वविदः । नियमफलं तु 'पुत्रवित्तिः' इत्यादौ-द्वित्वाऽभावः ।

इन्न्द्रः ( ई. ४६ )—'त्रिप्रभृतिषु शाकटायनस्य' इति सूत्रेणात्र नकारस्य द्वित्वम् ।

सर्वत्र शाकल्यस्य ( ई. ५४ )—नेत्यनुवर्तते । यत्र-यत्र द्वित्वं विहितं तत्र-तत्र शाकल्यस्य ऋषेर्मते द्वित्वं न भवतीत्यर्थः । अर्कः, ब्रह्मा इत्याद्युदाहरणम् ।

'हलो यमां यमि लोपः' इति सूत्रस्य प्रयोजनं किम ? ( ई. ३२ )—अयम्भावः, हर्यनुभवः, न ह्यस्ति, इत्यादौ 'अचो रहाभ्यां द्वे' इत्यनेन द्वित्वे द्वियकारकं, तदभावे एकयकारकं रूपं सिद्ध्यत्येवेति 'हलो यमां यमि लोपः' इत्यस्य प्रयोजनं किमिति चेन्न, अदितेरादित्यस्य वा अपत्यम् आदित्यः इत्यत्र विभाषया यलोपविधानार्थं तस्यावश्यकत्वात् । तथा—आदित्यशब्दाद् देवतार्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये भत्वात् 'यस्येति च' इत्यकारलोपे 'हलो यमां यमि लोपः' इति विभाषया यलोपे उक्तं रूपं सिद्धं भवति ।

माहात्म्यम ( ई. ४७ ) 'हलो यमां यमि लोपः' इति सूत्रे 'यमां यमी'ति यथासंख्यविज्ञानाद् अर्थात् मकारस्य मकारे परे एव लोपलाभाद् यकारे परेऽत्र मलोपो नेति ।

विष्णवे ( ई. ५६ )—'विष्णो ए' इति स्थिते 'यथासंख्यमनुदेशः समानाम्' इति ज्ञापकात् 'एचोऽयवायावः' इत्यनेन ओकारस्य अवादेशे 'विष्णवे' इति सिद्धम् ।

गव्यम्—गोर्विकारो गव्यम् ( विकारार्थे यत् )। 'गो यम्' इति स्थिते ओकारस्य अच्परकत्वाऽभावात् 'एचोऽयवायाव:' इत्यप्राप्ते 'वान्तो यि प्रत्यये' इति ओकारस्य अवादेशे उक्तं रूपं सिद्धम् ।

गव्यूतिः ( ई. ४५, ५०, ५१, ५२, ६१ )—युधातोरधिकरणे क्तिन्प्रत्यये कृते 'ऊतियूति–' इत्यादिना निपातनाद्दीर्घे 'यूतिः' इति । 'गव्यूतिः, इत्यस्य गोप्रचारभूमिः, इत्यर्थे 'गोर्यूतौ छन्दस्युपसंख्यानम्' इति वार्तिकेन वान्तादेशे 'गव्यूतिः' इति । 'गव्यूतिः' इत्यस्य क्रोशयुगम् , इत्यर्थपक्षे तु लोकेऽपि 'अध्व-परिमाणे च' इति वार्तिकेन वान्तादेशो बोध्यः । 'वान्तो यि प्रत्यये' इत्यनेनात्र वान्तादेशस्तु न, यूतिशब्दस्य प्रत्ययत्वाभावात् ।

वान्त इत्यत्रेति ( ई. ३६ )—अयम्भावः–गव्यम् , नाव्यम् इत्यादौ पद-त्वेन 'लोपः शाकल्यस्य' इत्यनेन वकारस्य लोपः कथं नेति चेन्न, 'वान्त' इत्यत्र वकारप्रश्लेषेण श्रूयमाणवकारादेशविधानात् । अथ च यदि पदत्वबाधकेन भत्वेन 'गव्यम्' इत्यादौ लोपाप्रसक्तिस्तदा 'गव्यूतिः' इत्यादौ वकारलोपाऽभावार्थं 'गोर्यूतौ छन्दस्युपसंख्यानाम्' इति वार्तिके छकारात् पूर्वं वकारप्रश्लेषो बोध्यः । तथा च तत्सामर्थ्यादत्र वलोपाभाव इति ।

लव्यम ( ई. ४५, ५५, ५७ )—'लूञ् छेदने' इति धातोर्यत्प्रत्यये कृते गुणे 'लो यम्' इति स्थिते 'धातोस्तन्निमित्तस्य' इत्यनेन ओकारस्य धात्ववयवत्वात् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशे 'लव्यम्' इति ।

तन्निमित्तस्यैवेति किम् ?—अयमाशयः, यत्र यादिप्रत्ययनिमित्तको धातो-रेच् भवति, तत्रैव वान्तादेशो भवति । 'ओयते' इत्यत्र तु वेञ्धातोः कर्मणि लटि, यकि, सम्प्रसारणे च कृते आङा सहैकादेशो जातः । ततश्च यादिप्रत्ययनिमित्तक एच् नास्ति, किन्तु गुणनिमित्तक एवेत्यतोऽत्र वान्तादेशवारणाय तन्निमित्तस्यैवेति कर्तव्यम् ।

केचित्त्वत्र धातूपसर्गयोः कार्यं बहिरङ्गमिति वान्तादेशे कर्तव्ये गुणोऽसिद्ध एवेति 'औयत' इत्यत्र वान्तादेशवारणार्थं नियमभूतसूत्रं कर्तव्यामिति वदन्ति ।

वस्तुतस्तु 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति परिभाषया निषेधान्नात्रान्तरङ्ग-बहिरङ्गभाव इति तत्त्वविदः ।

क्षय्यम्—क्षेतुं शक्यं क्षय्यम् । क्षीधातोः शक्यार्थे यत्प्रत्यये गुणे 'क्षेयम्' इति स्थिते एकारस्य अच्परकत्वाभावात् अयादेशेऽप्राप्ते 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्तस्य यान्तादेशे उक्तं रूपं सिद्धम् ।

क्रय्यम्—क्रेतारः क्रीणीयुः इति बुद्ध्या आपणे प्रसारितं वस्तु 'क्रय्यम्' इति । अन्यत्र तु 'क्रेयम्' इति । क्रीञः कर्मणि यत्प्रत्यये गुणे 'क्रे यम्' इति स्थिते अच्परकत्वाऽभावात् अयादेशेऽप्राप्ते 'क्रय्यस्तदर्थे' इति निपातनात् एकारस्य यान्तादेशे उक्तं रूपं सिद्धम् ।

हर एहि ( ई. ३६ )—'हरे एहि' इति स्थिते 'एचोऽयवायावः' इत्ययादेशे 'लोपः शाकल्यस्य' इति यलोपे 'हर एहि' इति भूते 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धम्' इत्यनेन यलोपस्याऽसिद्धत्वाद् गुणाभावे 'हर एहि' इति । यलोपाभावपक्षे 'हरयेहि' इति भवति ।

गुरावुक्तः ( ई. ५४, ५५ )—'गुरौ उक्तः' इति स्थिते 'एचोऽयवायावः' इत्यावादेशे 'लोपः शाकल्यस्य' इति वलोपे सति 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धम्' इत्यनेन वलोपस्याद्धित्वाद् गुणाऽभावे 'गुरा उक्तः' इति । पक्षे 'गुरावुक्तः' इति च भवति ।

कानि सन्ति—ननु वाक्यसंस्कारपक्षे 'कानि सन्ति' 'कौ स्तः' इत्यादौ 'अचः परस्मिन् पूर्वविधौ' इति सूत्रेण स्थानिवद्भावाद् अस्धातुघटकाऽकाररूपाऽच्त्वमाश्रित्य यणावादेशौ कथन्नेति चेन्न, यणादिरूपपदचरमावयवकार्ये कर्तव्ये 'न पदान्त–' इति सूत्रेण स्थानिवद्भावनिषेधादिति ।

कृष्णर्द्धिः ( ई. ४५ )—ऋधधातोः क्तिनि 'झषस्तथोः–' इति धत्वे 'ऋद्धिः' इति । 'कृष्ण ऋद्धिः' इति स्थिते 'ऋकारस्य गुणवृद्धी अरारावेव' इति भाष्योक्त्या 'आद्गुणः' इत्यनेन अकार-ऋकारयोः स्थाने गुणे अकारे तस्य 'उरण् रपरः' इत्यनेन रपरत्वे 'कृष्णर्द्धिः' इति ।

अत्र धात्वन्तस्य धकारस्य 'अचो रहाभ्यां द्वे' इति द्वित्वाऽभावे सति 'झरो झरि सवर्णे' इति लोपे च सति एकधकारकं 'कृष्णर्धिः' इति । तस्यैव ( धात्वन्तस्य ऋधेर्धकारस्यैव ) द्वित्वाऽभावे लोपे च असति द्विधकारकम् , अथवा तस्यैव द्वित्वे लोपे च सति द्विधकारकमेव 'कृष्णर्द्धिः' इति । तस्यैव द्वित्वे सति लोपे च असति

त्रिधाकारकं 'कृष्णर्द्धि:' इति । तदुक्तं मूले—'द्वित्वाभावे लोपे सत्येकधम्' इत्यादि ।

तवल्कारः (ई. ५२, ५६, ५७, ६०)—'तव लृकार:' इति स्थिते 'आद्गुण:' इत्यनेन अकार-लृकारयोः स्थाने गुणे अकारे तस्य 'उरण् रपर:' इत्यनेन लपरत्वे 'तवल्कार:' इति ।

अत्र 'यणो मयो द्वे वाच्ये' इत्यस्य 'यणः परस्य मयो द्वित्वम्' इति व्याख्याने ककारस्य द्वित्वं लकारस्य तु 'अनचि चे'ति द्वित्वं तेन रूपचतुष्टयं बोध्यम् । तथा हि—लकारस्य द्वित्वे ककारस्य द्वित्वाऽभावे च सति द्विलकारकमेकककारकं च प्रथमं रूपम् । ककारस्य द्वित्वे लकारस्य द्वित्वाऽभावे द्विककारकमेकलकारकं च द्वितीयं रूपम् । लकार-ककारयोरुभयोरपि द्वित्वाऽभावे एकलकारकमेकककारकं च तृतीयं रूपम् । लकार-ककारयोरुभयोरपि द्वित्वे द्विलकारकं द्विककारकं च चतुर्थं रूपम् । इति । तदुक्तं मूले—'द्वित्वं लस्यैव कस्यैवे'त्यादीति ।

उपैति ( ई. ५७ )—इण्धातोर्लटि 'एति' इति । 'उप एति' इति स्थिते 'एङि पररूपम्' इति सूत्रं प्रबाध्य 'एत्येधत्यूठ्सु' इति वृद्धौ उक्तं रूपं सिद्धम् ।

प्रष्ठौहः ( ई. ५७ )—'प्रष्ठ ऊहः' इति स्थिते 'आद्गुण:' इति गुणं प्रबाध्य 'एत्येधत्यूठ्सु' इति वृद्धौ 'प्रष्ठौह:' इति सिद्धम् ।

माभवान्प्रेदिधत् ( ई. ४७ )—'प्र इदिधत्' इति स्थिते एकदेशविकृत-न्यायेन 'एत्येधत्यूठ्सु' इति न वृद्धिः एध्धातोरेजादित्वाऽभावात् । किन्तु गुण एव । एजादित्वविशेषणाभावे । तु इहापि वृद्धिः स्यात् ।

अवेहि ( ई. ४९ )—आ+इहि=एहि । 'अव एहि' इति स्थिते 'ओमा-ङोश्च' इति पररूपे 'अवेहि' इति । 'जानीहि' इत्यर्थः । ननु येन नाप्राप्तिन्यायेन 'एत्येधत्यूठ्सु' इति वृद्धिर्हि यथा 'एङि पररूपम्' इत्यस्यापवादस्तथा 'ओमाङोश्च' इत्यस्यापि कथन्नेति चेन्न, 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेनेयं वृद्धिः 'एङि पररूपमि'त्यस्यैव बाधिका न तु 'ओमाङोश्चे'त्यस्येति मूल एव प्रतिपादितत्वात् ।

अयम्भावः—'एत्येधत्यूठ्सु' इत्युत्तरं कानिचित् सूत्राणि पठित्वा 'एङि पर-रूपम्' इति पठित्वा पुनः कतिपयानि सूत्राणि पठित्वा 'ओमाङोश्चे'ति पठितम् । ततश्च उक्तन्यायेन एत्येधतीति वृद्ध्या 'एङि पररूपम्' इत्येव बाध्यते नतु 'ओमाङोश्चे'ति । तेन 'अवैहि' इति वृद्धिरसाधुरेव ।

प्रोढवान् ( ई. ३३, ४६, ४८, ५२ )—'प्र ऊढवान्' इति स्थिते 'आद्गुणः, इत्यनेन गुणे विभक्त्यादिकार्ये 'प्रोढवान्' इति ।

ननु 'प्रोढवान्' इत्यत्र 'प्रादूहोढोढ्येषैष्येषु' इति वार्तिकेन वृद्धिः कथन्नेति चेन्न, 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति परिभाषया निषेधात् । परिभाषायां मानन्तु 'व्रश्च—' इति सूत्रे राजेः पृथग्भ्राजिग्रहणम् । यदि सार्थकानर्थकयोर्द्वयोरपि शास्त्रे ग्रहणम्भवति, तदा भ्राजघटकस्यापि राजपदस्य राजग्रहणेन ग्रहणं स्यादेवेति भ्राजशब्दोच्चारणं व्यर्थमेवेति दिक् ।

दशार्णः ( ई. ४१,५३ )—दश ऋणानि दुर्गभूयः यस्मिन् देशे स दशार्णः' देशविशेषः । 'दश ऋणः' इति स्थिते गुणं बाधित्वा 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' इति वार्तिकेन वृद्धौ रपत्वे 'दशार्णः' इति ।

प्रार्च्छति ( ई. ४४, ५२, ५४, ५६, ६१ )—'प्र ऋच्छति' इति स्थिते गुणं बाधित्वा 'उपसर्गादृति धातौ' इति सूत्रेण वृद्धौ 'उरण् रपरः' इति रपरत्वे 'प्रार्च्छति इति ।

नन्वत्र 'आर्' इत्येकादेशस्य 'अन्तादिवच्च' इति पूर्वान्तवत्वेन रेफस्य पदान्तत्वात् 'खरवसानयोर्विसर्जनीयः' इति विसर्गः कुतो नेति चेन्न, 'उभयथर्क्षु' 'कर्तरिचर्षि' इत्यादिषु रेफस्य विसर्गाकरणपूर्वकं रेफविशिष्टनिर्देशेन 'अन्तवद्भावेन पदान्तरेफस्य न विसर्गः' इति ज्ञापनेनादोषात् ।

उपसर्गादृति धातौ—ननु क्रियायोगे सत्येव उपसर्गसंज्ञाविधानेन उपसर्गग्रहणादेव 'धाता'विति लाभे सूत्रे 'धातौ' इति व्यर्थमिति चेन्न, 'प्र ऋच्छति' इत्यवस्थायाम् 'ऋत्यःक' इति प्रकृतिभाववारणाय धाताविति योगविभागस्यावश्यकत्वात् । तथा हि—उपसर्गादृतीति, धाताविति च सूत्रं विभज्यते, तत्र पूर्वसूत्रे धाताविव्यर्थाल्लभ्यमादाय उक्तार्थलाभः । धाताविव्युत्तरसूत्रेऽपि उपसर्गादृ'तीति पूर्वसूत्रमनुवर्तते ततश्च परोऽपि 'ऋत्यकः' इति प्रकृतिभावः पुनर्वृद्धिविधानसमार्थ्यान्न भवतीति दिक् ।

उपार्च्छति ( ई. ४४, ४७ )—साधनप्रकारः 'प्रार्च्छति' इति वद्बोध्यम् ।

अन्तादिवच्च ( ई. ५४ )—अत्र 'एकः पूर्वपरयोः' इति सूत्रमनुवर्तते । यथासंख्यपरिभाषया 'अन्तादिवत्' इत्यस्य क्रमेण अन्वयः । ततश्च—'पूर्वपरयोर्भवन् एकः आदेशः पूर्वस्य अन्तवत्, परस्य आदिवत् 'स्यात्' इत्यर्थो लभ्यते ।

पूर्वस्यान्तवदित्यस्योदाहरणं 'क्षीरपेण' इति । अत्र 'क्षीरप इन' इति स्थिते 'आद्गुणः' इत्येकादेशः एकारः, तत्र पूर्वान्तवत्त्वेन 'पे' इत्युत्तरपदस्य एकाच्त्वात् 'एकाजुत्तरपदे णः' इति णत्वं भवति । परस्यादिवदित्यस्योदाहरणं 'खट्वा' इति । अत्र सवर्णदीर्घे कृते आकारस्य परादित्वेन टाप्त्वात् ततः परस्य सोर्हल्ङ्याब्भ्यो इत्यादिलोपो भवतीति ।

प्रार्षभीयति ( ई. ५५, ५७, ६० ) ऋषभमात्मनः इति=ऋषभीयति । 'प्र ऋषभीयति' इति स्थिते गुणं प्रबाध्य 'वा सुप्यापिशलेः' इति वृद्धौ रपरत्वे 'प्रार्षभीयति' इति । वृद्धौ सत्याम् 'अचो रहाभ्यां द्वे' इति द्वित्वं तु न, 'शरोऽचि' इति निषेधात् । पक्षे तु 'आद्गुणः' इति गुणे रपरत्वे 'प्रर्षभीयति' इति ।

उपेडकीयति ( ई. ४३, ४८, ५१, ५२ )—'एङि पररूपम्' इति सूत्रे 'वा सुपि' इत्यनुवर्त्य 'एङि पररूपम्' इति प्रथमं वाक्यम् । अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यादिति तदर्थः । उदाहरणं तु 'प्रेजते' इत्यादि । अत्र नित्यमेव पररूपं भवति । 'वा सुपि' इति तु द्वितीयं वाक्यम् । अत्र 'एङि पररूपम्' इत्यनुवर्तते' धातौ उपसर्गादित्यादि च । ततश्च—अवर्णान्तादुपसर्गादेङादौ सुब्धातौ परे पररूपमेकादेशो वा स्यादित्यर्थो भवति । तेन 'उप एडकीयति' इति स्थिते विकल्पेनानेन पररूपे 'उपेडकीयति' इति । पक्षे 'वृद्धिरेचि' इति वृद्धौ 'उपैडकीयति' इत्यपि भवति ।

घि-टि इत्यादि ( ई. ४७ )—प्रकृतिभागस्य घिसंज्ञा, प्रत्ययमात्रस्य टिसंज्ञा, प्रकृतिप्रत्यययोः वृद्धिसंज्ञा, प्रकृतिमात्रस्य सम्बुद्धिसंज्ञा, प्रत्ययमात्रस्य भसंज्ञा—अपृक्तसंज्ञा च, प्रकृतेरन्त्यालः पूर्ववर्णस्य उपधासंज्ञा, प्रत्ययमात्रस्य विभक्तिसंज्ञा—सर्वनामस्थानसंज्ञा च, प्रकृतिप्रत्यययोः प्रगृह्यसंज्ञेति ।

शकन्धुः—शकानां = देशविशेषाणाम्, अन्धुः = कूपः, शकन्धुः । 'शक अन्धुः' इति स्थिते सवर्णदीर्घं प्रबाध्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इत्यनेन पररूपे उक्तं रूपं सिद्धम् । अत्र तत्पररूपं टिसंज्ञकस्य भवति, टिसंज्ञा च 'अचोऽन्त्यादि टि' इत्यनेन 'आद्यन्तवदेकस्मिन्' इति वचनात् ककारोत्तरवर्तिनः अकारस्य भवतीति न विस्मर्तव्यम् ।

मनीषा ( ई. ५५ )—मनसः ईषा, मनीषा। 'मनस् ईषा' इति स्थिते 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकेन 'अस्' इति टेः ईकारस्य च स्थाने पररूपे 'मनीषा' इति।

स्थूलौतुः ( ई. ५१,५५ )—ओतुः=बिडालः मार्जारश्च। स्थूलश्चाऽसौ ओतुः स्थूलोतुः स्थूलौतुः इति। 'स्थूल ओतुः' इति स्थिते 'ओत्वोष्ठयोः समासे वा' इति वार्तिकेन वृद्धिं बाधित्वा पररूपे 'स्थूलोतुः' इति। पक्षे 'वृद्धिरेचि' इति वृद्धौ 'स्थूलौतुः' इति।

शिव एहि (ई. ५२, ६०)—'शिव आ इहि' इति स्थिते 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यन्तरङ्गत्वात् सवर्णदीर्घस्याऽसिद्धत्वात् पूर्वम् 'आद्गुणः' इति आकारेकारयोः गुणे 'एहि' इति जाते 'शिव एहि' इति स्थिते 'अन्तादिवच्च' इत्यनेन अन्तवद्भावमादाय 'ओमाङोश्च' इति पररूपे उक्तं रूपं सिद्धम्।

पटत्पटेति ( ई. ३५, ५१, ५५ )—'डाचि बहुलं द्वे भवतः' इति बहुलग्रहणात् द्वित्वे सति 'पटत् पटत् इति' इति स्थिते 'तस्य परमाम्रेडितम्' इति द्वितीयस्य 'पटत्' शब्दस्य आम्रेडितसंज्ञायां 'नाम्रेडितस्यान्त्यस्य तु वा' इति सूत्रेण अत्शब्दान्तस्य तकारस्य पररूपे 'पटत्पटइति' इति स्थिते 'आद्गुणः' इति गुणे 'पटत्पटेति' इति। पररूपाभावपक्षे 'झलां जशोऽन्ते' इत्यनेन जश्त्वे 'पटत्पटदिति' इति।

अचि किम् (ई. ३७,३८)—'अकः सवर्णे दीर्घः' इति सूत्रे अच्पदानुवृत्त्यभावे 'कुमारी शेते' इत्यत्र दीर्घेकार–शकारयोः विवृतप्रयत्नतालुस्थानतुल्यत्वेन सावर्ण्यात् सवर्णदीर्घापत्तिः स्यात्। नच 'नाज्झलौ' इति सूत्रेण तयोः सावर्ण्यनिषेध इति वाच्यम्, तत्र सूत्रे अच्पदेन दीर्घादीनां ग्रहणाभावेन दीर्घादीनां हलां च परस्परं सवर्णसंज्ञानिषेधस्य वक्तुमशक्यत्वात्। अच्पदेन दीर्घादीनां ग्रहणम् 'अणुदित्—' सूत्रेण कर्तव्यम्, तच्च न सम्भवति 'नाज्झलौ' इति सूत्रार्थावबोधकाले ग्रहणकशास्त्रस्य 'अणुदित्—' सूत्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्त्या 'अणुदित्—' सूत्रेण ग्राहकत्वेन बोधाऽभावात्।

होतॢकारः ( ई. ४५ )—'होतृ ॡकारः' इति स्थिते 'ऋति ॡ वा' इति वार्तिकेन ऋकारस्य ॡकारस्य च स्थाने नृसिंहवत् द्व्यन्तरात्मनि द्विलकारवति

लृकारे जाते 'होत्लृकारः' इति । पक्षे ऋलृवर्णयोः सावर्ण्यात् 'अकः सवर्णे दीर्घः' इति दीर्घे 'होतॄकारः' इति तु न लृवर्णस्य द्वादश तस्य दीर्घाऽभावात् ।

लृवर्णस्येति ( ई. ४३ )—'लृवर्णस्य द्वादश तस्य दीर्घाभावात्' । तेन 'होतृ लृकारः' इति स्थिते सवर्णदीर्घे कृते 'होतॄकारः' इत्येवोदाहृतं भाष्ये । नन्वेवं लृवर्णस्य दीर्घाभावे—'ॠति ॠ वा, ॡति ॡ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्' इति ग्रन्थाऽसङ्गतिरिति चेन्न, ताभ्यामपूर्वद्विमात्रिकस्य 'ॠ-ॡ' विधानस्य तत्रैव प्रतिपादितत्वात् । तथा हि तत्र 'आद्यस्य=ऋकारस्य, मध्ये द्वौ रेफौ तयोरेका मात्रा ( 'व्यञ्जनं चार्धमात्रिकम्' इति स्मरणात् ), अभितः=रेफद्वयस्य पुरस्तादुपरिष्टाच्च, विद्यमानयोर्ह्रस्वऋकारांशयोरेका मात्रा । एवं द्वितीयस्य=विधेयस्य ॡकारस्य मध्ये द्वौ लकारौ तयोरका मात्रा । अभितः=ॡकारस्य पुरस्तादुपरिष्टाच्च विद्यमानयोर्लृकारांशयोरेका मात्रा, इत्युभयत्रापि अपूर्वं द्विमात्रिकं विधाने च न ग्रन्थाऽसङ्गतिरिति दिक् ।

गवाग्रम् ( ई. ३४ )—'गो अग्रम्' इति स्थिते अवादेशं प्रबाध्य 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे प्राप्ते तमपि प्रबाध्य 'अवङ्स्फोटायनस्य' इत्यनेन अग्रमित्येतद्घटकाऽकारे परे पदान्ते विद्यमानस्य एङन्तगोशब्दस्य 'अनेकाल्शित्सर्वस्ये'ति परिभाषया सम्पूर्णस्थाने अवङि प्राप्ते 'ङिच्चे'त्यनेन गकारोत्तरवर्तिनः ओकारस्य अवङि अनुबन्धलोपे सवर्णदीर्घे च 'गवाग्रम्' इति । पक्षे सर्वत्र विभाषा गोः' इति प्रकृतिभावे 'गो अग्रम्' इति । प्रकृतिभावाऽभावपक्षे 'एङः पदान्तादति' इति पररूपे 'गोऽग्रम्' इति ।

'अति' इति निवृत्तम्—'अवङ् स्फोटायनस्य' इति सूत्रे 'अति' इति निवृत्तम् । अत्र मानन्तु—'नित्यग्रहणं किमर्थम् ? 'इन्द्रे च' इत्यारम्भसामर्थ्यादेव नित्यत्वलाभात्, इति 'प्लुतप्रगृह्या अचि नित्यम्' इति सूत्रस्य भाष्यमेव । अन्यथा 'गवेन्द्रः' इत्यादौ अत्परत्वाऽभावाद् अवङोऽप्राप्तया तदर्थम् 'इन्द्रे च' इत्यस्यावश्यकत्वात् 'आरम्भसामर्थ्यान्नित्यत्वलाभः' इति भाष्यकारोक्तिरसङ्गता स्यात् । 'अति' इति निवृत्तौ 'अचि' इति मण्डूकप्लुत्या अनुवृत्तिस्वीकारे च पूर्वसूत्रेणैव तत्राऽवङ्सिद्धौ 'इन्द्रे च' इत्यस्य वैयर्थ्येन तत्सामर्थ्यात् 'नित्यमिति किम्' इति भाष्योक्तेः सामञ्जस्यमेवेति दिक् ।

**गवाक्षः ( ई. ५५ )**—'वातायनं गवाक्षः स्यादि'त्यमरः। क्वचिद्भवतीत्यंशे एव प्रवर्तते, क्वचित्तु न भवतीत्यंशे एव, क्वचिदुभयमित्येवं लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा 'सर्वत्र विभाषा गोः' इत्यत्र आश्रीयते। ततश्च 'गवाक्षः' इत्यत्र नित्यमेव अवङ् भवतीति बोध्यम्।

इत्यच्सन्धिप्रकरणम्।

---

## अथ प्रकृतिभावप्रकरणम्

**'हरी एतौ' इत्यादावयमेवेति ( ई. ५१, ५६ )**—अयम्भावः, 'हरी ईशौ' इत्यादौ 'प्लुतप्रगृह्या अचि नित्यम्' इति, 'चक्री अत्र' इत्यत्र तु 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति च सावकाशम्, ततश्च 'हरी एतौ' इत्यादौ परत्वात् 'इकोऽसवर्णे—' इति ह्रस्वसमुच्चित एव प्रकृतिभावो भवेत्। नित्यग्रहणे तु तत्सामर्थ्येन प्लुतस्य प्रगृह्यसंज्ञकस्य च अचि परेऽयमेव प्रकृतिभावो नान्य इति बोध्यते। तेन 'हरी एतौ' इत्यत्र द्विवचनान्तस्य 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायामेव प्रकृतिभावो भवति, न तु 'इकोऽसवर्णे—' इति ह्रस्वसमुच्चित इति।

**अत्र ह्रस्वविधिसामर्थ्यादेवेति**—अयम्भावः, 'चक्री अत्र' इति स्थिते 'इकोऽसवर्णे—' इति ह्रस्वमात्रविधाने 'इको यणचि' इति यण् स्यादिति चेन्न, ह्रस्वविधानस्य वैयर्थ्यप्रसङ्गात्। एवञ्च प्रकृतिभावस्य अन्यथासिद्धत्वात्तदनुकर्षणार्थं श्चकारो न कर्तव्यः, इति भाष्याशयः।

**पार्श्वम ( ई. ४८ )**—पर्शूनां समूहः 'पार्श्वम्'। 'पर्शु अ' इति स्थिते 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति ह्रस्वसमुच्चितप्रकृतिभावे प्राप्ते 'सिति च' इति तन्निषेधे 'इको यणचि' इति यणादेशे विभक्त्यादिकार्ये 'पार्श्वम्' इति।

**देवद३त्त ( ई. ४५, ६१ )**—'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' अत्र सूत्रे 'दूराद्धूते च' इत्यनुवर्तते। 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतम्। ततश्च—'दूरात् सम्बोधने यद्वाक्यं तत्र सम्बोध्यमानवाचकं यत् पदं तदवयवस्य ऋकारभिन्नस्य गुरोः ( अन्त्यस्य तु गुरोरगुरोश्च ) प्लुतः, स्यात्' इत्यर्थो भवति। तेन 'दे३वदत्त, देवद३त्त, देवदत्त३, इति रूपत्रयं सिद्धं भवति। अत्र सूत्रे एकैकग्रहणं पर्यायार्थम्। अन्यथा सर्वेषां गुरूणां युगपत् प्लुतः स्यादिति तत्त्वविदः।

सुश्लोकेति (ई. ५२, ५४, ५५, ५६)—'सुश्लोक३—' इति प्लुतान्तो वैदिक मन्त्रः। तत्र पदकाले तस्मात् परतः 'इति' शब्दं पदकाराः पठन्ति। 'तत्र सुश्लोक३ इति' इति स्थिते 'अप्लुतवदुपस्थिते' इति सूत्रेण अप्लुतवद्भावेन प्रकृतिभावाऽभावे सति 'आद्गुणः' इति गुणे 'सुश्लोकेति' इति सिद्धम्। अत्र इति शब्दः पदकारप्रक्षिप्तत्वादवैदिकः इति न विस्मर्तव्यम्।

अग्नी३इति (ई. ३३, ४३)—'अप्लुतवदुपस्थिते' इति सूत्रस्य 'वत्' ग्रहणस्य प्रत्युदाहरणमेतत्। तथा हि—'वत्' ग्रहणाऽभावे प्लुतस्य स्थाने अप्लुत एव विधीयेत। अतः प्लुत एव निवर्तेत। ततश्च 'अग्नी३ इति' इत्यत्र प्रकृतसूत्रेण प्लुतोऽप्लुतविधाने सति 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्येति प्रकृतिभावे ईकारः त्रिमात्रो न श्रूयेत। वत्करणे तु प्लुतकार्यस्य प्रकृतिभावस्यैव निवृत्तिर्गम्यते न तु प्लुतस्यापीति नोक्तदोषः इत्यवसेयम्।

चिनु हि३इति (ई. ४१)—'चिनु हि३इति' इति स्थिते 'ई३चाक्रवर्मणस्य' इति सूत्रेण प्लुतोऽप्लुतवद्भावे सवर्णदीर्घे 'चिनुहीति' इति। पक्षे 'चिनु हि३इति' इति। 'विभाषापृष्टप्रतिवचने हेः' इत्यनेनात्र प्लुतो बोध्यः।

हरी एतौ (ई. ४४, ५३, ५६)—'हरी एतौ' इति स्थिते 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्ये'ति प्रकृतिभावे उक्तं रूपं सिद्धम्। अत्र प्रगृह्यसंज्ञाकाले ईकारस्य परादिवत्त्वात् द्विवचनत्वं बोध्यम्।

अमुकेऽत्र (ई. ४७)—'अदसो मात्' इति सूत्रस्थ 'मात्' ग्रहणस्य प्रत्युदाहरणमेतत्। तथाहि—'मात्' ग्रहणे सति मकारात् परस्य एकारस्याऽसम्भवाद् 'ईदूदेद्—' इति सूत्राद् एकारानुवृत्तिर्नायाति। 'मात्' ग्रहणाऽभावे तु 'संयोगशिष्टे'ति न्यायेन 'ईत्-उत्-एत्' इति त्रयाणामनुवृत्तिः स्यादिति 'अमुकेऽत्र' इत्यत्रापि प्रगृह्यसंज्ञा दुर्वारेति दिक्।

वाक्यस्मरणयोरङित्—अयम्भावः, 'निपात एकाजनाङ्' इति सूत्रे 'अनाङ्' इति पर्युदासात् ङित्तु आकारः प्रगृह्यो न भवति, तेन 'आ (ईषत्) उष्णम्' इति स्थिते आकारस्य ङित्त्वात् प्रगृह्यत्वाऽभावे 'आद्गुणः' इति गुणे 'ओष्णम्' इति सिद्धं भवति। नच प्रयोगदशायां ङकारस्याऽश्रवणाविशेषात् ङिदङिद्विवेकः कथमिति वाच्यम्, 'वाक्यस्मरणयोरङित्' इति भाष्योक्तत्वात्। तथा च भाष्यम्—

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् 'वाक्यस्मरणयोरङित् ॥ इति ।'

**विष्णो इति ( ई. ४२ )**—'विष्णो इति' इति स्थिते 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्ये'ति प्रकृतिभावे 'विष्णो इति । प्रगृह्यत्वाऽभावे अवादेशे 'लोपः शाकल्यस्ये'ति वलोपे 'विष्ण इति' इति ( वलोपस्याऽसिद्धत्वान्न गुणः ) । वलोपाभावे 'विष्णविति' इति ।

**ऊँ इति–उ इति–विति ( ई. ३७, ४५, ५७ )**—'उ इति' इति स्थिते 'ऊँ' इति सूत्रेण दीर्घानुनासिकप्रगृह्यत्वविशिष्ट 'ऊँ' इत्यादेशे प्रगृह्यत्वात् प्रकृतिभावे च विहिते 'ऊँ इति' इति । विकल्पपक्षे 'उञः' इति सूत्रेण प्रगृह्यत्वात् प्रकृतिभावे 'उ इति' इति । प्रगृह्यत्वस्याप्यभावे सति यणादेशे 'विति' इति । ननु एकसूत्रत्वेनैवोक्तप्रयोगसिद्धे किमर्थं योगविभागः इति चेन्न, एकसूत्रत्वे सति–उञः इतौ परे ऊँ इत्ययं दीर्घोऽनुनासिकः प्रगृह्यश्चादेशः शाकल्यस्य मते स्यात् । ततश्च तदभावपक्षे 'निपात एकाजि'ति नित्ये प्रगृह्यत्वे सति 'विति' इति तृतीयरूपस्यासिद्धेः ।

**किम्वुक्तम् (ई. ४७,५७,६१)**-'किमु उक्तम्' इति स्थिते 'निपात एकाजनाङ्' इति सूत्रं प्रबाध्य 'मय उञो वो वा' इति वादेशे 'किम्वुक्तम्' इति । वादेशे सति 'मोऽनुस्वारः' इत्यनुस्वारस्तु न वत्वस्यासिद्धत्वात् ।

**सोमो गौरी अधिश्रितः ( ई. ४६ )**—गौर्यामित्यर्थः । 'सुपां सुलुग्—' इति सप्तम्याः लुक् । अत्र 'गौरी अधिश्रितः' इति स्थिते 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या—' इति प्रकृतिभावे उक्तं रूपं सिद्धम् ।

**मामकी तनू ( ई. ५६ )**—मामक्यां तन्वामित्यर्थः । 'सुपां सुलुग—' इति सप्तम्याः लुक् । 'मामकी तनू इति' इति स्थिते 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञायां प्रकृतिभावे च कृते उक्तं रूपं सिद्धम् ।

**अर्थे ग्रहणं किमिति ( ई. ४९, ५०, ५२, ५७ )**—अयम्भावः, 'ईदूदन्तं यत्सप्तम्यन्तं तत् प्रगृह्यसंज्ञं स्यात्' इत्यर्थेनैव इष्टसिद्धेः 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे अर्थग्रहणं किमर्थमिति चेन्न, तदेव व्यर्थीभूय ज्ञापयति—'सप्तम्यर्थविशेष्यताकोपस्थितिजनकस्यैव इकारान्तस्य ऊकारान्तस्य वा प्रगृह्यसंज्ञे'ति । तेन वाप्यामश्वः

इत्यत्र समासघटकवापीशब्दस्य प्रत्ययलक्षणेन सप्तम्यन्तत्वेऽपि समासे शक्तिस्वीकारेण सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वाऽभावेन न प्रगृह्यसंज्ञेति ।

फक्किकाप्रकारस्त्वित्थम्—ननु 'ईदूतौ च सप्तम्यर्थे' इति सूत्रेऽर्थग्रहणाऽभावेऽपि ईदूदंशे सप्तमीविशेषणत्वेन, प्रत्ययांशेन तदादिविशेषणत्वेन तदन्तविधिद्वयेन ईदूदन्तं यत् सप्तम्यन्तं तत् प्रगृह्यसंज्ञकं स्यादित्यर्थेनैवेष्टसिद्धेरर्थग्रहणं व्यर्थमेव । न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषया तदन्तविधिनिषेधेन उक्तार्थाऽसम्भव इति वाच्यम्, 'ईदूतौ सप्तमी प्रगृह्यम्, अदसः एच्च द्विवचनम्' इत्येव सूत्रयितव्ये गुरुभूतन्यासकरणसामर्थ्यात् । ययी, पपी, इत्यादौ परादिवद्भावेन सप्तमीत्वमादाय सूत्रसाफल्येऽपि ऊकारांशेऽसम्भवाच्चेति चेन्न, अर्थग्रहणेन सप्तम्यर्थविशेष्यताकोपस्थितिजनकस्यैव ईकारान्तस्य ऊकारान्तस्य वा तत्संज्ञाबोधनात् । एवञ्च 'गौरी अधिश्रितः, 'तनू इति' इत्यत्र ईकारान्ते ऊकारान्ते च सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वस्य ( सप्तम्यर्थनिरूपितशक्तिपर्याप्त्यधिकरणत्वस्य ) सत्त्वेन प्रगृह्यसंज्ञासिद्धिः । 'वाप्यश्वः' इत्यत्र तु समासघटकवापीशब्दस्य प्रत्ययलक्षणेन सप्तम्यन्तत्वेऽपि समासे समुदाये शक्तिस्वीकारेण सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वाऽभावेन न प्रगृह्यसंज्ञेति । 'वाप्यश्वः' इत्यत्र 'वापीनिष्ठाऽधिकरणतानिरूपिताऽधेयतावानश्वः' इति शाब्दबोधः ।

दधि दधि ( ई. ४१ )—अत्र 'अणोऽप्रगृह्यस्यानुनासिकः' इति विभाषया अनुनासिके 'दधिँ' इति । पक्षे 'दधि' इति । अत्र सूत्रे 'अण्' इति पूर्वणकारेणैव गृह्यते, व्याख्यानात् । तेन 'कर्तृ' इत्यत्र नानुनासिकः ।

इति प्रकृतिभावप्रकरणम् ।

---

## अथ हल्सन्धिप्रकरणम्

टोः किं सर्पिष्टमम ( ई. ३७, ४७, ५२, ५५ )—'न पदान्ताट्टोरनाम्' इति सूत्रे टोर्ग्रहणाऽभावे 'सर्पिष् तमम्' इति स्थिते 'स्वादिष्वि'ति अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा पदत्वात्, षकारस्य पदान्तत्वात् ततः परस्य तकारस्य ष्टुत्वनिषेधः स्यात् ।

फक्किकाप्रकारस्त्वित्थम्—

टोः किं सर्पिष्टमम्—ननु 'तोः षि' इति निर्देशात् 'क्वचिदेकदेशोऽप्यनुवर्तते' इति परिभाषया 'ष्टुना ष्टुः' इति सूत्रात् 'टु' मात्रस्यानुवृत्तौ पदान्ताट्टवर्गात् परस्यानामः स्तोः ष्टुर्न स्यादित्यर्थलाभे 'न पदान्ताट्टोरनाम्' इति सूत्रे टोर्ग्रहणं व्यर्थमिति चेन्न, तदेव व्यर्थं सदुक्तपरिभाषाया अनित्यत्वं ज्ञापयति। तथा च टोर्ग्रहणाभावे 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषया 'ष्टुः' इति समुदायस्यानुवृत्तौ पदान्ताभ्यां षकारटवर्गाभ्यां परस्येत्याद्यर्थे 'सर्पिष्टमम्' इत्यत्रापि ष्टुत्वनिषेधः स्यादिति तद्वारणाय सूत्रे टोर्ग्रहणस्यावश्यकत्वात्।

न च 'सर्पिष् तमम्' इति स्थिते 'स्वादिष्वसर्वनामस्थाने', अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा षकारस्य पदान्तत्वात् जश्त्वे षकारानुवृत्तावपि पदान्ते टवर्गस्यैव लाभः इति वाच्यम्, जश्त्वे कर्तव्ये 'ह्रस्वात्तादौ तद्धिते' इति सूत्रविहितषत्वस्यासिद्धत्वात् जश्त्वाभावात् पदान्ते न टवर्गः किन्तु षकार इति तत्र दोषस्य जाकरूकत्वात्।

यरोऽनुनासिकेऽनुनासिको वा (ई. ५७)—यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यादित्यर्थः। 'एतद् मुरारिः, एतन्मुरारिः' इत्युदाहरणम्।

एतन्मुरारिः (ई. ४०)—'एतद् मुरारिः' इति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रेण दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च दस्यानुनासिके नकारे 'एतन्मुरारिः' इति। पक्षे 'एतद्मुरारिः' इति।

चतुर्मुखः (ई. ४६, ४८, ५१, ५२)—अयम्भावः, 'चतुर्मुखः' इत्यत्र रेफणकारयोः मूर्धस्थानान्तर्यात् 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनेन रेफस्य अनुनासिको णकारः कुतो नेति चेन्न, 'एतन्मुरारिः' इत्यादौ स्थानतः प्रयत्नतश्चान्तरतमे स्पर्शे चरितार्थे लब्धप्रयोजनोऽयमनुनासिकविधिः स्थानमात्रेण आन्तर्यमादाय रेफे न प्रवृत्तिमर्हति, 'यूनि लब्धे तु युवतिर्जरठे रमते कथम्' इति न्यायात्।

फक्किकाप्रकारस्त्वित्थम्—

ननु 'चतुर्मुखः' इत्यत्र रेफणकारयोः मूर्धस्थानान्तर्यात् 'यरोऽनुनासिके—' इति सूत्रेण रेफस्यानुनासिको णकारः कुतो नेति चेदुच्यते—'स्थानेऽन्तरतम उरण् रपरः' इति संहितापाठे प्रथमान्तपाठस्वीकारे स्थानिनः स्थाने अन्तरतम एव आदेशो भवतीति यथा नियमः, तथा भाष्यकृता 'स्थानेऽन्तरतमे' इति सप्तम्यन्त-

पाठं स्वीकृत्य आदेशोऽन्तरतमे स्थानिनि भवतीत्यर्थं व्याख्याय आदेशोऽपि अन्तरतमस्यैव स्थानिनः स्थाने भवतीति नियमः स्वीकृतः। एवं च स्थानप्रयत्नाभ्याम् अन्तरतमे स्पर्शे चरितार्थे लब्धप्रयोजनोऽयमनुनासिकविधिः केवलं स्थानेन सदृशे रेफे न प्रवर्तते। नन्वेवं तर्हि क्वचित् प्रथमान्तपाठस्य क्वचिच्च सप्तम्यन्तपाठस्य स्वीकारे अर्धजरत्यापत्तेः दीर्घेकारादौ यणनापत्तेश्चेति चेन्न, 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रात् सवर्णपदमाकृष्य प्रकृतसूत्रे संयोज्य पदान्तस्य यरोऽनुनासिके परे सवर्णानुनासिकः स्यादिति 'सूत्रार्थे रेफोष्मणां सवर्णा न सन्ती'ति भाष्येण रेफस्य सावर्ण्याभावात् णत्वाऽभाव इति समाधानात्।

× उत्थानम (ई. ४२, ४३, ५५, ६१)-'उद् स्थानम्' इति स्थिते 'उदः स्थास्तम्भो 'पूर्वस्य' इति विहितः पूर्वसवर्णः यद्यपि 'अलोऽन्त्यस्ये'ति नियमादन्त्यस्याकारस्य प्राप्नोति, तथापि 'आदेः परस्य' इति सूत्रेण सकारस्य विधीयते। सकारस्य च अघोषमहाप्राणत्वात्तत्स्थाने तादृश एव थकारे जाते तस्य 'झरो झरि सवर्णे' इति पाक्षिके लोपे दकारस्य 'खरि च' इति चर्त्वे 'उत्थानम्' इति। लोपाभावपक्षे तु 'खरि चे'ति चर्त्वं प्रति थकारस्याऽसिद्धत्वात् एकतकारकं द्विथकारकं च रूपमिति तत्त्वविदः।

वाग्घरिः (ई. ३४, ४४, ५२, ५७)—'वाग् हरिः' इति स्थिते 'झयो होऽन्यतरस्याम्' इति सूत्रेण पूर्णसवर्णविधौ गकारस्य पूर्वनिमित्तत्वात् तत्सवर्णेषु क–ख–ग–घ–ङेषु पञ्चस्वपि प्राप्तेषु घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हकारस्य तादृशे घकारे जाते 'वाग्घरिः' इति। पूर्वसवर्णाभावे तु 'वाग्हरिः' इति।

तच्छिवः (ई. ५० ५३)—'तद् शिवः' इति स्थिते दस्य चुत्वेन जकारे कृते 'खरि च' इत्यनेन स्थानत आन्तर्यात् जकारस्य चकारे 'शश्छोऽटि' इति छत्वे 'तच्छिवः' इति। पक्षे 'तच् शिवः' इति।

कुण्ठितः (ई. ५५)—'कुठि प्रतिघाते' इदित्त्वान्नुम् क्तः इट्। अत्र 'नश्चापदान्तस्य झलि' इत्यनुस्वारे कृते 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णे उक्तं रूपं सिद्धम्।

कुर्वन्ति (ई. ४३)—कृञो लटि प्रथमपुरुषबहुवचने रूपम्। अत्र 'रषाभ्याम्—' इति णत्वे प्राप्ते तस्याऽसिद्धत्वात् 'नश्चापदान्तस्य—' इत्यनुस्वारे

'अनुस्वारस्य ययि—' इति परसवर्णः। परसवर्णे कृते सत्यपि पुनः णत्वं कुतो नेति न शंकनीयम्, 'रषाभ्याम्—' इत्यपेक्षया परसवर्णस्य परतया णत्वे कर्तव्ये अनुस्वारस्थानिकपरसवर्णस्य नकारस्यासिद्धत्वात्।

यँल्लोकम् (ई. ४१)—'यम् लोकम्' इति स्थिते 'मोऽनुस्वारः' इत्यनुस्वारे 'वा पदान्तस्य' इति अनुस्वारस्य परसवर्णेऽनुनासिके लकारे उक्तं रूपं सिद्धम्।

किन् ह्नुते इति (ई. ३६)—'किम् ह्नुते' इति स्थिते 'नपरे नः' इत्यनेन मस्य नत्वे 'किन्ह्नुते' इति। नत्वाऽभावपक्षे 'मोऽनुस्वारः' इत्यनेन मस्यानुस्वारे 'किंह्नुते' इति भवति।

प्राङ्ख्षष्ठः (ई. ४६)—'प्राङ् षष्ठः' इति स्थिते 'ङ्णोः कुक्टुक् शरि' इति कुकि 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति कुकः ककारस्य द्वितीयाक्षरे खकारे जाते उक्तं रूपं सिद्धम्। कुगभावे 'प्राङ् षष्ठः' इति।

सन्त्सः (ई. ५७)—'सन् सः' इति स्थिते 'नश्च' इति धुटि जश्त्वे चर्त्वे 'सन्त्सः' इति। धुडभावे 'सन्सः' इति।

सञ्छम्भुः (ई. ४६,५२, ५६, ५७, ६०)—'सन् शम्भुः' इति स्थिते 'शि तुक्' इति नकारस्यान्तावयवे तुकि अनुबन्धलोपे 'शश्छोऽटि' इति शस्य छत्वे 'स्तोः श्चुना श्चुः' इति तकारस्य चुत्वे पुनः 'स्तोः श्चुना श्चुः' इति नकारस्य चुत्वेन ञकारे 'झरो झरि सवर्णे' इति चलोपे 'सञ्छम्भुः' इति। चलोपाऽभावे 'सञ्च्छम्भु' इति। चलोपछत्वयोरुभयोरभावे 'सञ्च्शम्भुः' इति। छत्वतुकोरभावपक्षे 'सञ्शम्भुः' इति।

तदुक्तं मूले—

'अछौ अचछा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥ इति।

सन्नच्युतः—'सन् अच्युतः' इति दशायां 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति ह्रस्वात्परस्य ङम्प्रत्याहारान्तःपातिनो नकारात् परस्य अच्प्रत्याहारान्तर्वर्तिनोऽकारस्य ङमुटि अनुबन्धलोपे 'सन्नच्युतः' इति।

**संस्स्कर्ता** ( ई. ४७, ४९, ५२ ५७, ६१ )—'सम् कर्ता' इति दशायां 'सम्परिभ्यां करोतौ भूषणे' इति सुटि अनुबन्धलोपे 'सम् स्कर्ता' इति स्थिते 'समः सुटि' इति सूत्रेण सुट्सम्बन्धिसकारे परे समो मस्य रुत्वे अनुबन्धलोपे 'सर् स्कर्ता' इति जाते 'अत्राऽनुनासिकः पूर्वस्य तु वा' इति रोः पूर्वमनुनासिके 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य 'वा शरि' इति विसर्गस्य विसर्गे प्राप्ते तमपि प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इति विसर्गस्य सत्वे 'सँस्स्कर्ता' इति । अनुनासिकाऽभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारे 'संस्स्कर्ता' इति ।

**संस्स्कर्ता**—सम् + स्कर्तेति स्थिते, समः सुटीति मस्य रुत्वे 'अत्रानुनासिकः' इत्यनुनासिके पक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारे खरवसानयोरिति विसर्गे संपुंकानामिति सत्वे सँस्स्कर्ता संस्स्कर्तेति । अत्र समो वा लोपमेके इति भाष्यबलान्मलोपपक्षेऽपि अनुनासिकानुस्वाराभ्यामेकसकारकरूपद्वये पूर्वोक्तरूपद्वये च, अनचि चेति सकारस्य शरः खय इति ककारस्य अनचि चेत्यनुस्वारस्य अचो रहाभ्यां द्वे, यणो मय इति च तकारस्य द्वित्वे चतुष्पञ्चाशत् । एषु अणोऽप्रगृह्यस्ये, त्यनुनासिकविकल्पेऽष्टोत्तरशतं रूपाणीति ।

**पुँस्कोकिलः** ( ई. ३५, ५५ )—'पुम् कोकिलः' इति स्थिते 'पुमः खय्यम्परे' इति सूत्रेण पुमो मकारस्य रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन विभाषया रोः पूर्वस्य अनुनासिके रेफस्य विसर्गे 'पुँः कोकिलः' इति स्थिते व्युत्पत्तिपक्षे 'अप्रत्ययस्येति षत्वपर्युदासाद् 'इदुदुपधस्ये'ति षत्वाऽप्राप्तावपि 'कुप्वोः' इति ≍क ≍पयोः प्राप्तौ तं प्रबाध्य, एवमव्युत्पत्तिपक्षेऽप्युक्तसूत्रेण प्राप्तं षत्वं प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इत्यनेन सत्वे 'पुँस्कोकिलः' इति । अनुनासिकाभावे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेन अनुस्वारे 'पुंस्कोकिलः' इति ।

**पुँस्पुत्रः** ( ई. ४५ ४८ )—'पुम् पुत्रः' इति स्थिते 'पुमः खय्यम्परे' इति पुमो मस्य रुत्वे 'अत्रानुनासिकः—' इत्यनुनासिके 'खरवसानयोः—' इति रेफस्य विसर्गे सति व्युत्पत्तिपक्षे ≍क≍ पयोः प्राप्तौ अव्युत्पत्तिपक्षे तु 'इदुदुपधस्य—' इति षत्वप्राप्तौ तौ प्रबाध्य 'सम्पुङ्कानाम्—' इति सत्वे 'पुँस्पुत्रः' इति । अनुनासिकाभावपक्षे 'पुंस्पुत्रः' इति च भवति ।

पुँख्यानम (ई. ४९, ५१, ५४, ५६)—चक्षिङ्धातोर्ल्युटि अनादेशे 'चक्षिङः, ख्याञ्' इति ख्याञादेशे 'ख्यानम्' इति। पुंसः ख्यानम्, पुम् ख्यानम् इति स्थिते 'मोऽनुस्वारः' इत्यनुस्वारे 'वा पदान्तस्य' इति परसवर्णे उक्तं रूपं सिद्धम्। "पुमः खय्यम्परे' इति रुत्वन्तु न, 'ख्याञादेशे न' इति वार्तिकनिषेधात्।

चक्रिंस्त्रायस्व (ई. ४१)—'चक्रिन् त्रायस्व' इत्यवस्थायां 'नश्छव्यप्रशान्' इति सूत्रेण नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'चक्रिर् त्रायस्व' इति जाते 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'विसर्जनीयस्य सः' इत्यनेन विसर्गस्य सत्वे 'चक्रिँस्त्रायस्व' इति। अनुनासिकाऽभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इति अनुस्वारे 'चक्रिंस्त्रायस्व' इति।

नॄन् पाहि (ई. ४२, ५५)—'नॄन् पाहि' इत्यवस्थायां नॄन् पे' इति नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'खरवसानयोः–' इति रेफस्य विसर्गे 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य कुप्वो≍क≍पौ च' इत्युपध्मानीये कृते नॄँ≍पाहि' इति। अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेन अनुस्वारे कृते 'नॄं≍पाहि' इति, उपध्मानीयाभावपक्षे रुत्वानुनासिकविसर्गेषु कृतेषु नॄँः पाहि' इति, अनुनासिकाभावपक्षे अनुस्वारे कृते 'नॄंः पाहि' इति, रुत्वाऽभावपक्षे तु 'नॄन् पाहि' इति पञ्च रूपाणि भवन्ति।

कांस्कान् (ई. ५७, ५६, ६०)-'कान् कान्' इति दशायां तस्य परमाम्रेडितम्' इति परस्य 'कान्' इत्यस्याम्रेडितसंज्ञायां 'कानाम्रेडिते' इति आम्रेडितसंज्ञके परे पूर्वस्य 'कान्' इत्यस्य नकारस्य रुत्वे अनुबन्धलोपे 'अत्राऽनुनासिकः पूर्वस्य तु वा' इति नस्यानुनासिके 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'सम्पुंकानां सो वक्तव्यः' इति सत्वे 'काँस्कान्' इति। पक्षे अनुस्वारे 'कांस्कान्' इति।

पुंख्यानम्—चक्षिङो ल्युटि अनादेशे चक्षिङः ख्याञादेशे ख्शादिरयमादेश इति भाष्यबलेन शस्य यो वेति शकारस्य यकारे रुत्वं प्रति यत्वस्यासिद्धत्वेनाम्परत्वाभावेन पुंख्यानमित्यत्र पुमः खयीति रुत्वन्नेति संक्षेपः।

वासः क्षौमम्—अत्र विसर्जनीयस्य सः, शर्परे विसर्जनीयः, कुप्वो≍क≍पौ चेत्येतेषां प्राप्तौ, येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायेन जिह्वामूलीयेन सत्वस्य बाधेऽपि, परत्वात् शर्परे विसर्जनीयः इति विसर्ग एवेत्याशयः।

पदस्येति किं गम्यते—ननु 'नश्चापदान्तस्य झलि' सूत्रे मकारानुकर्षणार्थकचकारेणापदान्तस्य मस्यानुस्वारश्चेत्तर्हि झल्येवेति नियमादेव गम्यत इत्यत्रानुस्वारो न भविष्यतीति चेन्न, यत्र यत्र शुद्धनियमस्तत्र तत्र विपरीतनियमः, एवञ्च झलि परतोऽनुस्वारश्चेत्तर्हि, अपदान्तस्यैव मस्येति हरिं वन्दे इति मूल एवानुस्वारापत्तेः । एवञ्च 'उञि च पदे' इत्यतः पदानुवृत्तिः कार्या ।

फक्किकाशयस्तु इत्थम् , ख्याञादेशे न—अयम्भावः,—चक्ष्धातोर्ल्युट्-प्रत्यये 'चक्षिङः ख्याञ्' इति ख्याञादेशे ख्यानमिति रूपं सिद्धम् । तथा च—'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये 'ख्शादिरयमादेशः' इत्युक्तम् । एवञ्च ख्याञादेशो न भवति, किन्तु ख्शाञादेशो भवति 'शस्य यो वा' इति वार्तिकञ्चासिद्धकाण्डे पठितम् । तथा च—शकारस्थाने यो हि जातो यकारः स अन्यस्मिन् कार्ये कर्तव्येऽसिद्धो भवति ।

एवञ्च 'पुमः खय्यम्परे' इति रुत्वे कर्तव्ये यकारस्यासिद्धत्वेन शकार एवोपलभ्यते, ततश्च शकारस्याम्प्रत्याहारे पाठाभावेन अम्परकखय्प्रत्याहारपरत्वाभावात् 'पुमः खय्यम्परे' इति सूत्रप्राप्तिरेव नास्तीति 'ख्याञादेशे न' इति वचनमपूर्वं न, किन्तु फलितमेव । तथा च रुत्वाभावे सकारस्य लोपे पुंख्यानमिति सिद्धम् ।

च द् विसर्गः—'कुप्वोः ≍क ≍पौ च' इति सूत्रं यत्र यत्र प्रवर्तते तत्र तत्र सर्वत्रैव 'विसर्जनीयस्य सः' इति सूत्रं प्रवर्तते । 'शर्परे विसर्जनीयः' इति सूत्रन्तु 'कुप्वोः' इति सूत्रविषये सर्वत्र न प्रवर्तते, इति 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायेन 'विसर्जनीयस्य सः' इति सूत्रस्यैव बाधकं 'कुप्वोः' इति सूत्रम्भवति' न तु 'शर्परे विसर्जनीयः' इति सूत्रस्य । एवञ्च वासः क्षौममित्यादौ विसर्ग इति ।

कौतस्कुतः ( ई. ४७, ५६ )—कुतः कुतः आगत इत्यर्थे 'तत आगतः' इत्यणि वृद्धौ 'कौतः कुतः' इति स्थिते 'कुप्वोरि'ति सूत्रं प्रबाध्य 'कस्कादिषु च' इत्यनेन अनिणः परस्य विसर्गस्य सत्वे 'कौतस्कुतः' इति ।

धनुष्कपालम ( ई. ४० )—धनुः कपालम् इति विग्रहे समासे व्यपेक्षालक्षणसामर्थ्यस्यापि सत्त्वात् 'इसुसोः सामर्थ्ये' इति षत्वविकल्पे प्राप्ते तं प्रबाध्य 'नित्यं समासेऽनुत्तरपदस्थस्य' इति नित्यषत्वे धनुष्कपालमिति ।

शिवच्छाया ( ई. ५२ ) 'शिव छाया' इति स्थिते 'छे च' इति तुकि 'शिव त् छाया' इति दशायां श्चुत्वस्यासिद्धत्वात् 'झलां जशोऽन्ते' इति तकारस्य जश्त्वेन दकारे कृते चर्त्वस्यासिद्धत्वात् पुनः दस्य श्चुत्वेन जकारे ततः 'खरि च' इति जस्य चर्त्वे 'शिवच्छाया' इति। 'चोः कुः' इति कुत्वं तु न, चुत्वस्याःसिद्धत्वात्।

आच्छादयति ( ई. ५३ ) 'आ छादयति' इति स्थिते 'पदान्ताद्वा' इति तुकि श्चुत्वस्यासिद्धत्वात् जश्त्वेन दकारे ततः चर्त्वस्यासिद्धत्वात् पुनः दस्य श्चुत्वेन जकारे ततः 'खरि च' इति चर्त्वे चुत्वस्यासिद्धत्वात् कुत्वाऽभावे उक्तं रूपं सिद्धम्।

चेच्छिद्यते ( ई. ४३, ४४, ५१ )—'चे छिद्यते' इति स्थिते 'दीर्घात्' इति सूत्रेण छकारात्प्राग्दीर्घस्योपरि तुकि जश्त्व–चुत्व–चर्त्वेषु 'चेच्छिद्यते' इति। दीर्घस्थोऽयं तुक्, न तु छस्य, 'सेनासुराच्छाये'ति ज्ञापकात्। अन्यथा यदि हि छस्य तुक् स्यात्तर्हि छस्य चर्त्वे सति अत्रापि चद्वयस्य श्रवणापत्तिः स्यात्, किञ्च 'सन्निपात' परिभाषया चर्त्वाऽप्रवृत्तावपि छकारोपरि चकारस्तु श्रूयत एवेति।

काँस्कान् (ई. ३४, ३७, ६०)-'कान् कान्' इति दशायां 'तस्य परमाम्रेडितम्' इति परस्य 'कान्' इत्यस्याम्रेडितसंज्ञायां 'कानाम्रेडिते' इति आम्रेडितसंज्ञके परे पूर्वस्य 'कान्' इत्यस्य नकारस्य रुत्वे अनुबन्धलोपे 'अत्राऽनुनासिकः पूर्वस्य तु वा' इत्यनेन नस्यानुनासिके 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'सम्पुंकानां सो वक्तव्यः' इति सत्वे 'काँस्कान्' इति। पक्षे अनुस्वारे 'कांस्कान्' इति।

कस्कः ( ई. ४२, ५० )—वीप्सायां द्वित्वे पूर्वखण्डे अकारात् परस्य विसर्गस्य 'कस्कादिषु च' इत्यनेन सत्वे 'कस्कः' इति। षत्वन्तु न 'कस्कादिषु च' इत्यनेन इणः परस्यैव विसर्गस्य षत्वविधानात्।

स्वच्छाया ( ई. ४१ )—'स्व छाया' इति दशायां 'छे च' इति तुकि अनुबन्धलोपे 'स्व त् छाया' इति जाते 'झलां जशोऽन्ते' इति जश्त्वेन तकारस्य दकारे 'स्तोः श्चुना श्चुः' इति दस्य श्चुत्वेन जकारे 'खरि च' इति जस्य चर्त्वे 'स्वच्छाया' इति।

लक्ष्मीच्छाया ( ई. ५० )—'लक्ष्मी छाया' इति दशाया 'पदान्ताद्वा' इति तुकि अनुबन्धलोपे 'लक्ष्मी त् छाया' इति स्थिते 'झलां जशोऽन्ते' इति तकारस्य जश्त्वेन दकारे 'स्तोः श्चुना श्चुः' इति दस्य श्चुत्वेन जकारे 'खरि च' इति जस्य चर्त्वेन चकारे 'लक्ष्मीच्छाया' इति तुगभावे 'लक्ष्मीछाया' इत्यपि भवति ।

इति हल्सन्धिप्रकरणम् ।

## अथ विसर्गसन्धिप्रकरणम्

कः त्सरुः—अत्र विसर्गस्य सत्वमपवार्य 'शर्परे विसर्जनीयः' इति विसर्जनीयस्य विसर्जनीये सति उक्तं रूपं सिद्धम् ।

* हरिः शेते ( ई. ३६ )—हरिः शेते इति स्थिते 'वा शरि' इति विसर्गस्य विसर्गे 'हरिः शेते' इति । पक्षे 'विसर्जनीयस्य सः' इति सत्वे सस्य श्चुत्वेन शकारे 'हरिश्शेते' इति ।

रामस्थाता (ई. ५०,६१)—'रामः स्थाता' इति स्थिते 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन विसर्गस्य लोपे 'राम स्थाता' इति । विसर्गाभावपक्षे 'वा शरि' इति विसर्गस्य विसर्गे 'रामः स्थाता' इति । विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे 'रामस्स्थाता' इति तृतीयं रूपं सिद्ध्यति ।

हरिस्फुरति ( ई. ३३, ५२, ५९ )—'हरिः स्फुरति' इति स्थिते 'खर्परे शरि वा विसर्गस्य लोपो वक्तव्यः' इति वार्तिकेन विसर्गस्य लोपे 'हरिस्फुरति' इति । पक्षे 'वा शरि' इति विसर्गे 'हरिः स्फुरति' इति । विसर्गाभावे 'खरवसानयोः—' इति विसर्गस्य सत्वे 'हरिस्स्फुरति' इति ।

पयस्पाशम् ( ई. ५१ )—'याप्ये पाशप्' कुत्सितं पय इत्यर्थः । 'पयः पाशम्' इति स्थिते 'सोऽपदादौ' इत्यनेन विसर्गस्य सत्वे उक्तं रूपं सिद्धम् ।

सर्पिष्पाशम ( ई. ४५ ) 'याप्ये पाशप' कुत्सितं सर्पिरित्यर्थः । 'सर्पिः पाशम्' इति स्थिते 'सोऽपदादौ' इति विसर्गस्य सत्वे प्राप्ते तं प्रबाध्य 'इणः षः' इति इण उत्तरस्य रुसम्बन्धिनो विसर्गस्य षत्वे उक्तं रूपं सिद्धम् ।

सर्पिष्कल्पम् ( ई. ५० )—'ईषदसमाप्तौ कल्पप्'। 'सर्पिः कल्पम्' इति स्थिते सत्वं प्रबाध्य 'इणः षः' इत्यनेन इण उत्तरस्य रुसम्बन्धिनो विसर्गस्य षत्वे 'सर्पिष्कल्पम्' इति।

सर्पिष्कम् ( ई. ५५ )—'अज्ञाते कुत्सिते' इति वा कः। अत्र 'सोऽपदादौ' इति प्राप्तसत्वं प्रबाध्य 'इणः षः' इत्यनेन षत्वे उक्तं रूपं जातम्।

गीः काम्यति ( ई. ४३, ५५ )—गृधातोः क्विपि ईत्वे रुत्वे विसर्गे 'गीः' इति। ततः 'गीः काम्यति' इति स्थिते 'काम्ये रोरेवेति वाच्यम्' इति वार्तिकेन काम्यप्रत्यये परतः रुस्थानिकस्यैव विसर्गस्य 'सोऽपदादौ' इति विधिर्भवतीति नियमाद् 'पाशकल्पककाम्येष्विति वाच्यम्' इति वार्तिकेन विसर्गस्य न सत्वम्।

सर्पिष्काम्यति ( ई. ४८ )—'सर्पिः काम्यति' इति स्थिते 'पाशकल्पककाम्येष्विति वाच्यम्' इति वार्तिकेन विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य 'इणः षः' इति षत्वे उक्तं रूपं सिद्धम।

नमस्करोति ( ई. ५७ )—अत्र 'नमस्पुरसोर्गत्योः' इति सूत्रेण सत्वं भवति।

आविष्कृतम ( ई. ५३ )—प्रकाशीकृतमित्यर्थः। आविः कृतमिति स्थिते 'इदुदुपधस्य चाऽप्रत्ययस्य' इत्यनेन इकारोपधस्य विसर्गस्य षत्वे उक्तं रूपं सिद्धम्।

अग्निः करोति—ननु स्थानिवत्सूत्रं प्रति त्रिपाद्या असिद्धत्वात्तत्र कर्त्तव्ये स्थानिवद्भावाप्राप्त्या प्रकृते इदुदुपधस्येति सूत्रेऽप्रत्ययग्रहणसत्त्वेऽपि षत्वं कथन्नेति चेन्न, अनेनैव वतिग्रथितातिदेशानां त्रिपाद्यामपि प्रवृत्तिरिति ज्ञापनेनादोषात्। अत एव रामः इत्यादौ विसर्गसिद्धिः।

मातुः कृपा ( ई. ४७, ५०, ५४, ६१ )—'इदुदुपधस्य चाऽप्रत्ययस्य' इति सूत्रेण 'भ्रातुष्पुत्रः' इत्यत्रापि षत्वसिद्धौ भ्रातुष्पुत्रशब्दस्य कस्कादिषु पाठो निष्फलः। तदेव व्यर्थं सत् 'एकादेशशास्त्रनिमित्तकस्य न षत्वम्' इति ज्ञापयति। तेन 'मातुः कृपा' इत्यत्र एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रनिमित्तकत्वात् न षत्वम्।

अयम्भावः, 'भ्रातुः पुत्रः' इत्यत्र 'इदुदुपधस्य चाप्रत्ययस्य' इत्यनेन विसर्गस्योकारोपधतया षत्वसिद्धेस्तदर्थं क्रियमाणः कस्कादिगणे भ्रातुष्पुत्रशब्दपाठो व्यर्थः सन् एकादेशशास्त्रनिमित्तकस्य 'इदुदुपधस्ये'त्यनेन षत्वं न भवतीति ज्ञापयति।

ततश्च कस्कादिगणे तत्पाठाभावे 'भ्रातुः' इत्यत्र विसर्गस्य 'ऋत उत्' इत्येकादेशशास्त्रनिमित्तकत्वेन तस्य षत्वं न प्राप्नोतीति गणे तत्पाठस्य चारितार्थ्यम् । फलं तु 'मातुः कृपा' इत्यत्र विसर्गस्य न षत्वमिति ।

द्विष्करोति (ई. ३९, ४५, ५७)—'द्विः करोति' इति स्थिते 'द्वित्रिश्चतुरिति कृत्वोर्थे' इति सूत्रेण सुजन्तद्विस्शब्दविसर्गस्य षकारादेशे 'द्विष्करोति' इति । षत्वाभावपक्षे 'कुप्वोः—' इति सत्वापवादे विसर्गे 'द्विः करोति' इति ।

चतुष्कपालः (ई. ४९, ५१, ५३)—'द्वित्रिश्चतुरिति कृत्वोर्थे' इति सूत्रस्य 'कृत्वोर्थे' इत्यस्य प्रत्युदाहरणमेतत् । चतुर्षु कपालेषु संस्कृतः पुरोडाशः इत्यर्थे 'संस्कृतं भक्षाः' इत्यणि विवक्षिते 'तद्धितार्थोत्तरपदसमाहारे'ति समासः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् । अत्र चतुश्शब्दस्य कृत्वोऽर्थेऽवृत्तेर्न तद्विसर्गस्य षत्वविकल्पः, किन्तु 'इदुदुपधस्ये'ति नित्यमेव षत्वम् । (चतुष्कपालः पुरोडाशः) ।

प्रकारान्तरम्—

चतुष्कपालः—'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषया सुजन्ताभ्यां द्वित्रिशब्दाभ्यां साहचर्यात्सुजन्तस्यैव चतुःशब्दस्यापि ग्रहणम्भविष्यतीति चतुष्कपाल इत्यत्र सुजन्तत्वाभावाद् विकल्पषत्वाप्राप्तौ कृत्वोऽर्थग्रहणं व्यर्थम् । तदेव व्यर्थं सत् ज्ञापयति—साहचर्यं सर्वत्र नियामकं न भवतीति । तेन 'दीधीवेवीटाम्' इति सूत्रे दीधीवेवी इति धातुद्वयसाहचर्येऽपि इट गताविति धातोर्ग्रहणं न भवति किन्तु आगमस्येटो ग्रहणं भवतीति फलम्बोध्यम् ।

कस्कादिषु सर्पिष्कुण्डिका—ननु 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सूत्रेण सर्पिष्कुण्डिकेत्यत्रापि षत्वसिद्धौ कस्कादिषु तस्य पाठो व्यर्थ एवेति चेन्न, असमासे व्यपेक्षाविरहेऽपि 'आनय सर्पिष्कुण्डिका तिष्ठति' इत्यादौ षत्वार्थं सर्पिष्कुण्डिकाशब्दपाठस्य सफलत्वात् । व्यपेक्षायां नित्यार्थत्वाच्च ।

न च कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽव्यपेक्षायां चरितार्थ इति व्यपेक्षायां कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्यासिद्धत्वेन 'इसुसोः सामर्थ्ये' इत्यनेन विकल्प एव स्यादिति वाच्यम् । प्रत्ययरूपो यो विसर्गो न भवतीत्याद्यर्थेनात्र प्रत्ययरूपविसर्गस्याभावेन व्यपेक्षाविरहे 'इदुदुपधस्य' इति सूत्रस्यैव प्राप्तेः । प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यादिसिद्धान्तार्थे तु अत्र विसर्गस्य प्रत्ययसम्बन्धित्वेन व्यपेक्षाविरहे

'इदुदुपधस्य' इति सूत्राप्रवृत्तौ कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य तत्र चारितार्थ्येन व्यपेक्षायां विकल्पषत्वं भवत्येव।

**धनुष्कपालम्** ( ई. ४०, ५६ )—'धनुषः कपालम्' इति विग्रहे समासे सति व्यपेक्षालक्षणसामर्थ्यस्य सत्त्वात् 'इसुसोः सामर्थ्ये' इति षत्वविकल्पे प्राप्ते तत्प्रबाध्य 'नित्यं समासेऽनुत्तरपदस्थस्य' इति नित्ये षत्वे उक्तं रूपं सिद्धम्।

**परमसर्पिःकुण्डिका** ( ई. ४७ )—परमश्चाऽसौ सर्पिः परमसर्पिः तस्य कुण्डिका = परमसर्पिःकुण्डिका। अत्र विसर्गस्य उत्तरपदस्थत्वाभावात् 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वं न।

**अयस्कुम्भः** ( ई. ३४ )—'अयः कुम्भः' इति स्थिते 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति सूत्रेण विसर्गस्य सत्वे 'अयस्कुम्भः' इति। ( अयसः कुम्भः इति विग्रहः )।

**स्वःकामः** (ई. ४४)—'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति सूत्रस्य 'अनव्ययस्ये'त्यस्य प्रत्युदाहरणमेतत्। अनव्ययस्येत्यस्याऽभावे 'अयस्कामः' इति वदत्राऽपि सत्वे 'स्वस्कामः' इति स्यात्।

इति विसर्गसन्धिप्रकरणम्

---

## अथ स्वादिसन्धिप्रकरणम्

**स्वौजसमौडिति**—ननु स्वौजसमौडित्यनेन रोर्विधानेऽपि पथिमथ्यृभुक्षामादित्यत्र दीर्घोच्चारणेन रौ परे दीर्घो नेति कल्पनेन, राम इत्यादौ सुपि चेत्यस्याप्राप्त्या दोषाभाव इति चेन्न; यशोऽत्र पयोऽत्रेत्यत्रोत्वं प्रति रुत्वस्यासिद्धत्वादुत्वानापत्तेः, उत्वविधानस्य तु रुविधानवादिमते शिवोऽर्च्य इत्यादौ चारितार्थ्यादित्याशयेनाह—स्वौजसमौडिति।

**शिवोऽर्च्यः** ( ई. २९, ३२ )—'स्वौजसमौडिति' सुप्रत्यये शिवस् अर्च्य इति स्थिते जश्त्वं बाधित्वा 'अतो रोरप्लुतादप्लुते' इत्युत्वे प्रथमयोरिति दीर्घस्य नादिचीति निषेधे 'आद्गुणः' इति गुणे 'एङः पदान्तादति' इति पूर्वरूपे शिवोऽर्च्य इति सिद्धम्।

शिवोऽर्च्यः ( ई. ३३, ४६, ५०, ५२ )—'शिवस् अर्च्यः' इति स्थिते 'ससजुषो रुः' इति रुत्वे 'अतो रोरप्लुतादप्लुते इति उत्वे 'शिव उ अर्च्यः' इति जाते 'आद्गुणः' इति गुणे 'एङः पदान्तादति' इति पूर्वरूपे 'शिवोऽर्च्यः' इति ।

देवा इह (ई. ३३,६१)—'देवास् इह' इति दशायां 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति रोर्यादेशे 'लोपः शाकल्यस्य' इति यलोपे 'देवा इह' इति । यलोपाभावे 'देवायिह' इति ।

भो देवाः (ई. ३४,६०)—'भोस् देवाः' इति दशायां 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे 'भो देवाः' इति । अत्र 'भोस्' इति सकारान्तनिपातमव्ययम् ।

स उ एकाग्निः ( ई. ४५, ५६ )—अत्र 'उ' इति निपातः । 'सस् उ' इति स्थिते 'ससजुषो रुः' इति रुत्वे 'भोभगो—' इति यत्वे 'उञि च पदे' इत्यनेन यलोपे उक्तं रूपं सिद्धम् ।

भो लक्ष्मि ( ई. ४१ )—'भोस' इति सकारान्तो निपातः तस्य रुत्वे कृते 'भोभगो–' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे 'भो लक्ष्मि' इति ।

अहरहः ( ई. ४५ )—'नित्यवीप्सयोः' इति द्वित्वम् । 'अहन् अहन्' इति स्थिते 'न लुमते'ति निषेधात् सुपरकत्वाभावेन 'रोऽसुपि' इति रुत्वे अन्त्यरेफस्य विसर्गे उक्तं रूपं सिद्धम् । 'अहन्नि'ति रुत्वे तु 'अतो रोरि'ति उत्वं स्यात् ।

अहर्गणः ( ई. ५४ )—'अहन् गणः' इति स्थिते 'रोऽसुपि' इति 'अलोन्त्यस्ये'ति परिभाषया अहन्शब्दान्तस्य नस्य रेफादेशे 'अहर्गणः' इति सिद्धम् ।

भो अच्युत ( ई. ४३,४४,४८,५७ )—भोस् इति सकारान्तनिपातसम्बोधनम् अव्ययपदम् । तत्र 'भोस् अच्युत' इति स्थिते 'ससजुषो रुः' इति सस्य रुत्वे 'भोभगो—' इति तस्य यत्वे च कृते 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' इत्यनेन यकारस्य विभाषया लघूच्चारणयादेशे 'भोयच्युत' इति । विकल्पपक्षे 'भो य् अच्युत' इति दशायाम् 'ओतो गार्ग्यस्य' इत्यनेन अलघुप्रयत्नस्य यस्य लोपे 'भो अच्युत, इत्युक्तं रूपं सिद्धम् ।

अहोरूपम् ( ई. ३८ )—अहो रूपमिति विग्रहः । 'अहन् रूपम्' इति स्थिते 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे उक्तं रूपं निष्पन्नम् ।

अहोरात्रः ( ई. ५१ )—अहश्च रात्रिश्चेति द्वन्द्वे समासान्ते अचि 'यस्येति च'ति इकारलोपे 'अहन् रात्र' इति जाते 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति नस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे उक्तं रूपं सिद्धम् । अत्र नकारस्य रात्रिशब्दपरकत्वाभावात् कथं रुत्वमिति चेन्न, एकदेशविकृतन्यायेन तत्सिद्धेः ।

अहर्पतिः ( ई. ३८, ५२ )—'अहन् पतिः' इति स्थिते 'अहन्' इत्यनेन नकारस्य रुत्वे 'अहरादीनां पत्यादिषु वा रेफः' इति वार्तिकेन रेफस्य विसर्गं बाधित्वा पाक्षिके रेफे उक्तं रूपं सिद्धम् । रुत्वाभावपक्षे तु रेफस्य विसर्गे तस्य 'कुप्वोः' इति उपध्मानीयविसर्गौ भवत ।

गीर्पतिः ( ई. ५६ ) 'धूर्पतिः' इतिवत् ।

धूर्पतिः ( ई. ४२, ४८ )—धुरां पतिः धूर्पतिः । धुर् + पतिः इति स्थिते 'अहरादीनां पत्यादिषु वा रेफः' इत्यनेन विसर्गमपवाद्य रेफे 'र्वोरुपधाया दीर्घ इकः' इत्यनेन दीर्घे 'धूपतिः' इति । रुत्वाभावपक्षे विसर्गस्य 'कुप्वोः' इत्यनेन उपध्मानीय–विसर्गौ भवतः । तथा च—'धू≍पतिः'–धूः पतिः' इत्यपि ज्ञेयम् ।

ढ्रलोपे पूर्वस्य दीर्घोऽणः ( ई. ५७ )—ढ् च रेफश्च ढ्रौ, तौ लोपयतीति ढ्रलोपः तस्मिन् ढ्रलोपे । ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परतः पूर्वस्याणो दीर्घः स्यादिति फलितार्थः । लीढः, पुनारमते, इत्याद्युदाहरणम् ।

पूर्वग्रहणं किं—ननु ढ्रलोप इति सप्तमी श्रुत्या तस्मिन्निति परिभाषया पूर्वस्योपस्थित्या सिद्धे पूर्वग्रहणं व्यर्थमिति चेन्न, अलुगुत्तरपदे इत्यत उत्तरपदानुवृत्त्योत्तरपदशब्दस्य समासचरमावयवे रूढतया, लिहो ढौकनं लीढौकनं, रक्तान्निर्गतं नीरक्तमित्यत्र सूत्रस्य चारितार्थ्येऽपि अजर्घा, लीढ इत्यादि भाष्यप्रयोगे, पुनारमते इत्यादौ च दीर्घानापत्तेः ।

पूर्वग्रहणमनुत्तरपदेऽपि ( ई. ४९ )—ननु 'ढ्रलोपे पूर्वस्य–' इति सूत्रे 'ढ्रलोपे' इति सप्तमीनिर्देशात् 'तस्मिन्नि'ति परिभाषया पूर्वांशोपस्थित्या 'पुना रमते'

इत्यादौ पूर्वस्यैव दीर्घो भविष्यतीति किं पूर्वग्रहणमिति चेन्न, पूर्वग्रहणाभावे हि 'अलुगुत्तरपदे' इति सूत्राद् उत्तरपदानुवृत्त्या 'नीरक्तम्' 'दूरक्तम्' इत्यादिसमासस्थले एव दीर्घो भविष्यतीति 'लीढः, अजर्घाः' इत्यादौ दीर्घासिद्धेः। तस्मात् पूर्वग्रहणं कर्तव्यमेव। कृते हि तस्मिन् तत्सामर्थ्यात् उत्तरपदाननुवृत्तौ समासे असमासे च सर्वत्रैव दीर्घः सिद्ध्यतीति दिक्।

अजर्घाः ( ई. ४२ )—ननु 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रे 'पूर्वस्य' इति किमर्थम्? 'ढ्रलोपे' इति सप्तमीश्रुत्या 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाबलेन पूर्वस्य इति पदोपस्थापनादिति चेन्न, तथा सति अस्य सूत्रस्य 'अलुगुत्तरपदे' इत्यधिकारस्थतया अत्र सूत्रे 'उत्तरपदे' इत्यस्यानुवृत्तौ तेन पूर्वस्याच्छेपात् पूर्वस्याणः पूर्वपदस्थस्यैव दीर्घः स्यात्, तथा चैकपदे रेफलोपनिमित्तके रेफे परे ढ्रलोपनिमित्तकढकारे वा परे पूर्वस्याणो दीर्घो न स्यात्। 'पूर्वस्य ग्रहणे कृते तत्सामर्थ्यादत्रोत्तरपदे' इति न सम्बध्यते। तेन एकपदेऽपि दीर्घः सिद्ध्यति। यथा-'अजर्घ र्' इत्यत्र रेफे परे पूर्वस्याणो दीर्घे विसर्गे च 'अजर्घाः' इति।

पुनारमते ( ई. ३९ ) 'पुनर् रमते' इति दशायां 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति नकारादकारस्य दीर्घे 'पुनारमते' इति।

×हरी रम्यः ( ई. ५४ )—'हरिस् रम्यः' इति स्थिते 'ससजुषो रुः' इति सस्य रुत्वे 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे 'हरी रम्यः' इति।

शम्भू राजते ( ई. ५४ ) 'शम्भु स् राजते' इति दशायां 'ससजुषो रुः' इति रुत्वे 'रो रि' इति रुसम्बन्धिरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे 'शम्भू राजते' इति।

तृढः ( ई. ३८ )—'ढ्रलोपे' इति सूत्रे अण्ग्रहणाभावे 'ढरेफयोर्लोपनिमित्तयोः पूर्वस्य दीर्घः' इत्यर्थे तृह्धातोर्निष्ठायां क्तप्रत्यये 'तृह् त' इति स्थिते 'हो ढः' इति हस्य ढत्वे 'झषस्तथोः' इति तस्य धत्वे ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे 'ढ्रलोपे' इति पूर्वस्य ऋकारस्य दीर्घापत्तिः स्यादिति सूत्रे अण्ग्रहणमावश्यकमिति। कृते त्वण्ग्रहणे तत्सामर्थ्यात् पूर्वणकारेणैव 'अण्' प्रत्याहारग्रहणात् दीर्घाऽप्रवृत्त्या कृदन्तत्वात् सौ रुत्वे विसर्गे 'तृढः' इति।

मनोरथः ( ई. ४९,५७ )—'मनसरथः' इति दशायां 'ससजुषो रुः' इति सस्य रुत्वे 'हशि च' इति रोरुत्वे प्राप्ते 'रो रि' इति रेफस्य लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति तुल्यबलविरोधे सति परत्वात् 'रो रि' इति लोपे प्राप्ते 'पूर्वत्राऽसिद्धम्' इत्यधिकारसूत्रेण सपादसप्ताध्यायीस्थ 'हशि चेति सूत्रदृष्ट्या त्रैपादिकस्य 'रो रि' इति सूत्रस्याऽसिद्धत्वात् 'हशि चे'त्यनेन रोरुत्वे 'मन उ रथः' इति जाते 'आद्गुणः' इति गुणे 'मनोरथः' इति।

एष विष्णुः ( ई. ३३ )—'एषस् विष्णुः' इत्यवस्थायां रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ् समासे हलि' इति सुलोपे 'एष विष्णुः' इति।

स शम्भुः ( ई. ३४ )—'सस् शम्भुः' इति स्थिते रुत्वं प्रबाध्य 'एतत्तदोः' 'सुलोपोऽकोरनञ्समासे हलि' इति सुलोपे 'स शम्भुः' इति।

एषको रुद्रः ( ई. ३८ )—'एतत्तदोः' इति सूत्रे 'अकोः' किमित्यस्य प्रत्युदाहरणमेतत्। तत्र हि 'एषक स् रुद्रः' इत्यवस्थायाम् एतच्छब्दस्य सककारकत्वा सुलोपाऽभावे 'ससजुषो रुः' इति रुत्वे 'हशि चे'त्युत्वे 'आद्गुणः' इति गुणे 'एषको रुद्रः' इति भवति। अकोरित्यास्याऽभावे तु अत्राऽपि सुलोपापत्तिः स्यादिति सूत्रे तद्ग्रहणमावश्यकम्।

सैषः ( ई. ५७ )—'स स् एषः' इति स्थिते 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोपाऽभावे 'सैष[1]दाशरथी रामः' इत्यत्र पादो न पूर्यते अतोऽत्रानेन सुलोपे 'वृद्धिरेचि' इति वृद्धौ 'सैषः' इति भवति। अन्यत्र तु 'सस् एषः' इति स्थिते रुत्वे यत्वे यलोपे 'स एषः' इति भवति।

अप्लुतात् किम्—'अतो रोरप्लुतादप्लुते' इति सूत्रे अप्लुतादिति विशेषणाभावे 'एहि सुस्रोत३ अत्र स्नाहि' इत्यत्र प्लुताकारात्परस्य रुत्वस्योत्वं स्यादिति तन्निवारणार्थं तत्कर्त्तव्यम्। न च अप्लुतादिति विशेषणाभावेऽपि 'अत्' ग्रहणेन ह्रस्वाकार एव गृह्यते इति नात्र उत्वं स्यादिति वाच्यम्, उत्वे कर्तव्ये प्लुतस्याऽसिद्धत्वेन अतः परत्वात्। अप्लुतादिति कृते तु तत्सामर्थ्यात् नासिद्धत्वम्। यदि प्लुतोऽसिद्धः स्यात्तदा सर्वत्रैव अप्लुताकार एव उपलभ्येत इति अप्लुतादिति

१. सैष दाशरथी रामः सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी सैष भीमो महाबलः॥ इति श्लोकः।

विशेषणमेव व्यर्थं स्यात्। एवञ्च तपरकरणं दीर्घाकारात्परस्य रुत्वस्य उत्ववारणेन चरितार्थमिति तपरकरणसामर्थ्यान्नात्र उत्वमिति न शङ्कनीयम्।

अशि किमिति—ननु देवाः सन्तीत्यत्र यत्वस्यासिद्धत्वाद्विसर्ग एव भविष्यतीति भोभगो इति सूत्रेऽशीति व्यर्थमिति चेन्न, विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वापत्तेः। अनल्विधाविति निषेधस्तु न शंक्यः ? रोरिति समुदायरूपाश्रयणादिति।

देवास्सन्ति (ई. ४६)—ननु 'भोभगो—' इति सूत्रे 'अशि' ग्रहणाभावेऽपि उक्तप्रयोगे 'देवार्' इति स्थिते प्रकृतसूत्रेण यत्वे 'खरवसानयोः—' इति सूत्रेण विसर्गे च प्राप्ते विसर्गविधायकशास्त्रदृष्ट्या यत्वविधायकसूत्रस्य असिद्धत्वेन विसर्ग एव भविष्यतीति 'अशि' ग्रहणं किमर्थमिति चेन्न, विसर्गे कृतेऽपि स्थानिवद्भावेन विसर्गे रुत्वमानीय पुनरपि यत्वापत्तेः। अनल्विधाविति निषेधस्तु न, रुत्वधर्मस्य अल्मात्रवृत्तित्वाभावात्।

असः शिवः (ई. ४४)—'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रस्य 'अनञ्समासे' इत्यस्य प्रत्युदाहरणमेतत्। तत्र हि अनञ्समासे इत्यस्याभावे 'स शम्भुः' इतिवत् 'असः शिवः' इत्यत्राऽपि सुलोपे सति 'असः शिवः' इति हि स्यात्।

सेमामविड्ढिप्रभृतिम् (ई. ५६)—'सस् इमामविड्ढि प्रभृतिम्' इति स्थिते 'सोऽचि लोपे चेत्पादपूरणम्' इति सोर्लोपे 'आद्गुणः' इति गुणे उक्तं रूपं सिद्धम्।

स एवमुक्त्वा (ई. ५०)—'सोऽचि लोपे चेत्पादपूरणम्' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'लोपे चेत्' इत्यस्याभावे अत्रापि रुत्वं प्रबाध्य सोर्लोपे वृद्धौ 'सैवमुक्त्वा' इति स्यात्।

सोऽहमाजन्मशुद्धानाम् (ई. ५१)—'सोऽचि लोपे चेदि'ति सूत्रे 'सत्येवे'त्यवधारणं तु 'स्यश्छन्दसि बहुलम्' इति पूर्वसूत्राद् बहुलग्रहणानुवृत्त्या लभ्यते। तेन अत्र सोर्लोपो न भवति। लोपाभावेऽपि रुत्वादिके कृते पादपूर्तिदर्शनात्। लोपे पादपूर्तौ सत्यपि 'साऽहमाजन्मशुद्धानाम्' इत्यनिष्टापत्तिः स्यात्।

इति स्वादिसन्धिप्रकरणम्



# अथ अजन्तपुँल्लिङ्गप्रकरणम्

अर्थवदिति—धनम् , वनम् इत्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञावारणाय 'अर्थवद्' इति। 'अहन्' इत्यादौ प्रातिपदिकेन नलोपवारणाय 'अधातुः' इति। 'अप्रत्ययः' इत्यत्र प्रत्ययपदम् आवर्त्यते, तेन प्रत्ययं प्रत्ययान्तं च लभ्यते। प्रत्ययस्य पर्युदासात् 'हरिषु' इत्यादौ सोर्न प्रातिपदिकत्वम्। तदन्तपर्युदासादत्रैव 'हरिषु' इति समुदायस्य च न प्रातिपदिकत्वम्।

**समासग्रहणं किम** ( ई. ३४ )—अयम्भावः—'प्रत्ययग्रहणे यस्मात् विहितः स तदादेस्तदन्तस्य च' इति परिभाषया 'राजन् ङस् पुरुष सु' इति समुदायघटकराजन् ङस् इत्यस्य पुरुष सु इत्यस्य च प्रत्ययान्ततदादित्वेऽपि राजन् ङस् पुरुष सु, इति समुदायस्य प्रत्ययान्ततदादिभिन्नत्वात् 'अर्थवत्' इति सूत्रेणैव प्रातिपदिकसंज्ञासिद्धौ समासग्रहणं व्यर्थं सत् यत्र समुदाये पूर्वो भागः पदं तस्य समुदायस्य प्रातिपदिकसंज्ञा चेत्तर्हि समासस्यैवेति नियमयति। तेन गामानयेति वाक्यस्य प्रातिपदिकसंज्ञा न भवतीति फलम्।

**ङ्याब्ग्रहणं किम** ( ई. ५३ )—अयम्भावः—रमा गौरीत्यादौ 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया प्रातिपदिकत्वधर्मस्यानयनेन प्रातिपदिकादित्यनेनैवेष्टसिद्धौ ङ्याब्ग्रहणं व्यर्थं सत् ङ्याबन्तादेव तद्धितोत्पत्तिर्यथा स्यादित्यर्थं बोधयति। अन्यथा स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमश उपस्थितौ, आर्यशब्दात् पूर्वं कप्रत्यये ततष्टापि, आकारस्थानिकाकारस्याभावेन 'प्रत्ययस्थात्' इति नित्यमित्वे आर्यिका, इत्येकमेव रूपं स्यात्। ङ्याब्ग्रहणे कृते तु तत्सामर्थ्यात्पूर्वं टापि ततः कप्रत्यये 'केऽणः' इति ह्रस्वे आकारस्थानिकस्याकारस्य सत्त्वेन, 'उदीचामातः स्थाने यकपूर्वायाः' इति वैकल्पिक इत्वे, आर्यकेत्यपि सिध्यतीति फलम्बोध्यम्।

**रुत्वविसर्गौ रामः**—ननु 'स्थानिवत्' इति 'उपदेशेऽजनुनासिक इत्' इत्यनयोः सूत्रयोः दृष्ट्या 'ससजुषो रुः' इति शास्त्रस्यासिद्धत्वेन रेफपदान्तत्वाभावात्कथं विसर्ग इति चेन्न। 'न मुने' इति सूत्रे ने इति पदं पृथक् कृत्य क्वचित् त्रिपाद्या असिद्धत्वन्न भवतीति समाधानादिति।

सम्बुद्ध्याक्षिप्तस्य ( ई. ४८ )—अयम्भावः, 'येन विना यदनुपपन्नन्तत्तेनाक्षिप्यते' इति न्यायात् सम्बुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्धिपदार्थेऽन्वये सति, अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते स च हल् एङ्ह्रस्वाभ्यां परीभूतश्चेत्, इत्यर्थाङ्गीकारे हे कतरदित्यत्र तकारस्य लोपापत्तिस्तद्वारणाय, अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते सा च सम्बुद्धिरेङ्ह्रस्वाभ्यां परीभूता चेदित्यर्थाङ्गीकारे हे कुल इत्यत्र एकदेशविकृतन्यायेन लान्तभागस्याङ्गत्वे, परादिवद्भावेन सम्बुद्धित्वे जाते सति ह्रस्वात्परा सम्बुद्धिर्नास्ति, इति सलोपो न स्यादिति क्वचिदन्येनाक्षिप्तस्यापि पदार्थस्यान्यत्र पदार्थेऽन्वयो भवतीति बोध्यम् ।

रामः ( ई. ३१ )—रामशब्दात् प्रथमाविभक्तेरेकवचने सुप्रत्यये सति उकारस्य इत्संज्ञायां लोपे च कृते सस्य 'ससजुषो रुः' इति रुत्वे रेफस्य 'खरवसानयोर्विसर्जनीयः' इति विसर्गे 'रामः' इति ।

अत्र रमन्ते योगिनोऽस्मिन्निति विग्रहे तु 'हलश्चे'त्यधिकरणे घञ् । 'कृत्तद्धिते'ति प्रातिपदिकत्वम् । यदि तु—अव्युत्पन्नः, संज्ञाशब्दो वा रामशब्दस्तदा 'अर्थवदि'ति प्रातिपदिकत्वं बोध्यम् । तथा च श्रुतिः—

रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ इति ।

रामाः (ई. ४६, ५२, ६१)—रामशब्दात् जसि 'राम जस्' इति स्थिते 'चुटू' इति जकारस्येत्संज्ञालोपयोः कृतयोः 'हलन्त्यम्' इति सकारस्यापि इत्संज्ञा प्राप्तौ 'न विभक्तौ तुस्माः' इति निषेधे 'राम अस्' इति स्थिते 'अकः सवर्णे दीर्घः' इति सूत्रमपवाद्य 'अतो गुणे' इति पररूपे प्राप्ते सति परत्वात् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'रामाः' इति ।

'अतो गुणे' इति हि 'पुरस्तादपवादा अनन्तरान्' विधीन् बाधन्ते नोत्तरान्' इति न्यायेन सवर्णदीर्घस्यैवापवादः न तु पूर्वसवर्णदीर्घस्येत्यवसेयम् ।

फक्किकाशयस्तु इत्थम्—

**राम अस्**—इति स्थिते 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घः प्राप्तः 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घश्च प्राप्तः 'अतो गुणे' इति पररूपं च प्राप्तम्' इति यत्र यत्र अपदान्तादकारादग्रे ह्रस्वाकारः तत्र तत्र सर्वत्र सवर्णदीर्घस्य क्वचिच्च

प्रथमाद्वितीयास्थले पूर्वसवर्णदीर्घस्य च प्राप्तिरिति पररूपस्य निरवकाशस्य सकल-लक्ष्यप्राप्तसवर्णदीर्घस्य बाधकत्वम्। सवर्णदीर्घबाधेन चारितार्थ्ये पूर्वसवर्णदीर्घस्य बाधे निरवकाशत्वरूपबाधबीजस्याभावेन न पूर्वसवर्णदीर्घस्य बाधकत्वम्, किन्तु पूर्वसवर्णदीर्घस्यैव परत्वेन प्राबल्यात् प्रवृत्तिरिति। एवं हि अष्टाध्याय्यां पाठः— 'अतो गुणे' 'अकः सवर्णे दीर्घः' 'प्रथमयोः पूर्वसवर्णः' इति अपवादशास्त्रस्य प्राथम्यम्, बाध्यशास्त्रस्य च अनन्तरोत्तरत्वम्, इति पुरस्तादपवादाः–प्राग्वर्तिनोऽपवादाः, अनन्तरान्–सन्निकृष्टान्, विधीन् बाधन्ते नोत्तरान्—अनन्तरापेक्षया व्यवहितानिति तदर्थः। तथा च 'अतो गुणे' इति सूत्रं सवर्णदीर्घमेव बाधते, न तु पूर्वसवर्णदीर्घमिति न दोष इति दिक्।

**रामान्** ( ई. ३६ )—रामशब्दात् द्वितीयाबहुवचने शसि 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे च कृते 'राम अस्' इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे 'तस्माच्छसो नः पुंसि' इति सस्य नत्वे कृते 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे प्राप्ते 'पदान्तस्य' इति तन्निषेधे 'रामान्' इति सिद्धम्।

**स्थानिवदादेशोऽनल्विधौ** ( ई. ३४ )—'आदेशः स्थानिवत् स्यात् न तु स्थान्यलाश्रयविधौ' इति वृत्तिः। येन विधीयमानेन अन्यत्प्रसक्तं निवर्तते स आदेशः, यस्य स्थाने अन्यद्विधीयते तत् स्थानि। स्थानिना तुल्यः स्थानिवत्। आदेशः स्थानिना तुल्यो भवति, स्थानिधर्मको भवतीति यावत्। अलिति वर्ण-पर्यायः। विधीयत इति विधिः = कार्यम्। अलाश्रयो विधिः अल्विधिः। न अल्विधिः अनल्विधिः। 'अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति' फलितार्थः। उदाहरणन्तु 'रामाय' इति। अत्र ङेर्यादेशे कृते स्थानिवद्भावेन सुप्त्वमादाय 'सुपि चे'ति दीर्घो भवति।

**रामाय** ( ई. ५७ )—रामशब्दात् चतुर्थ्येकवचने ङेविभक्तौ 'ङेर्यः' इति ङेर्यादेशे 'राम य' इति स्थिते 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन सुप्त्वमादाय 'सुपि च' इति मकारोत्तरवर्तिनोऽकारस्य दीर्घे 'रामाय' इति सिद्धम्।

**रामेभ्यः** ( ई. ३० )—रामशब्दात् भ्यसि 'बहुवचने झल्येत्' इति एत्वे सस्य रुत्वे विसर्गे 'रामेभ्यः' इति।

**तदादिग्रहणम्** ( ई. ५१ )—'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रे तदादिग्रहणाभावे 'भवामि' 'भविष्यामि' इत्यादौ मिप्प्रत्यये परतो 'भू' इति

प्रकृतिमात्रस्य अङ्गसंज्ञा स्यात् न तु विकरणविशिष्टस्य 'भव' इत्यस्य, 'भविष्य' इत्यस्य च' ततो मिप्प्रत्ययविधेरभावात् । ततश्च उभयत्र 'अतो दीर्घो यञि' इति मिप्प्रत्ययपरतो दीर्घो न स्यादिति तदादिग्रहणमावश्यकमिति तत्त्वविदः ।

विधिरिति किम ( ई. ३४, ४७ )—ननु 'यस्मात् यः प्रत्ययः परत्वेन ःूयते तदादिशब्दस्वरूपं तस्मिन् प्रत्यये परे अङ्गसंज्ञम्' इत्यर्थेनैव सिद्धे 'यस्मात् प्रत्ययविधिः—' इति सूत्रे विधिग्रहणं किमर्थमिति चेन्न, 'स्त्री इयती' इत्यत्र स्त्री-शब्दात् परत्वेन इयदिति प्रत्ययस्य श्रूयमाणत्वात् तस्मिन् परे 'स्त्रियाः' इत्यङ्गकार्यं मियङ् स्यात् । तद्वारणार्थं सूत्रे विधिग्रहणमावश्यकमिति ।

फक्किकाशयस्तु इत्थम्—

यस्मात्प्रत्ययविधिरिति—यस्मात्प्रत्ययविधिरिति सूत्रस्थविधिग्रहणाऽभावे इदम् शब्दात् वतुपो वस्य घादेशे तस्य 'आयनेयी'ति इयादेशे ततः 'इदं किमो-रीश्की'ति इदम ईशादेशे तस्य 'यस्येति च' इति लोपे उगित्वान्ङीपि 'इयती' इति, तस्य स्त्रीशब्देन योगे 'स्त्री इयती' इत्यवस्थायाम् 'इयती' इत्यस्य केवलं प्रत्ययात्मतया स्त्रीशब्दस्यानेन अङ्गत्वे 'स्त्रियाः' इत्यनेन इयङापत्तिः स्यात् । विधिग्रहणे कृते तु 'इयती' इत्यस्य स्त्रीशब्दाद्वि॰तत्वाभावेन अङ्गत्वाऽभावान्न तदिति । न च 'यस्येति' लोपस्याभीयत्वेन असिद्धत्वादजादिप्रत्ययपरकत्वाभावात् नात्र इयङः प्रवृत्तिरिति वाच्यम् ? अन्यूनानतिरिक्तसमानाश्रये कार्ये कर्त्तव्ये एवा-भीयासिद्धत्वस्य प्रवृत्तेः ।

प्रत्यये किमिति ( ई. ४७ )—ननु 'यस्मात् प्रत्ययविधिस्तदाद्यङ्गसंज्ञं स्यादि'-त्यर्थेनैव इष्टसिद्धौ 'यस्मात् प्रत्यविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रे 'प्रत्यये' इति किमर्थमिति चेन्न, 'वव्रश्च' इत्यत्र प्रत्ययविशिष्टस्य अङ्गत्वेन उरदित्यदादेशस्य परनिमित्तत्वालाभात् 'अचः परस्मिन्—' इति स्थानिवत्त्वाप्रवृत्त्या न सम्प्र-सारणे—' इति सम्प्रसारणनिषेधो न स्यात् । अधिकस्य अङ्गत्वे च 'देवदत्त ओदन मपाक्षीत्' इत्यादौ देवदत्तादिशब्दोत्तरं 'सुप' निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात् तस्य लुङ्परत्वेन देवदत्तादिशब्दात् पूर्वमपि अडागमापत्तिः स्यात् । अतः 'प्रत्यये' इत्यावश्यकमिति ।

फक्किकाशयस्तु इत्थम्—

प्रत्ययग्रहणं किमर्थमिति—ननु यः प्रत्ययो यस्मात् क्रियते तदादिशब्द-

स्वरूपमङ्गसंज्ञं स्यादित्यर्थेऽपि दोषाऽभावे 'यस्मात्प्रत्ययविधिस्तदाद्यङ्गम्' इत्येता देव सूत्रमस्तु किं प्रत्ययग्रहणमिति चेन्न, तदादिशब्दस्वरूपं कियदित्यपेक्षायामवि शेषात् प्रत्ययविशिष्टं वा ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्। ततश्च 'व्रश्च इत्यत्र प्रत्ययविशिष्टस्याङ्गत्वेन 'उरा॑द'त्यादेशस्य परनिमित्तत्वालाभात् 'अचः प स्मिन्' इति स्थानिवत्त्वाप्रवृत्त्या 'न सम्प्रसारणे सम्प्रसारणम्' इति सम्प्रसारणनि षेधाभावेन वकारस्यापि सम्प्रसारणापत्तेः। किञ्च अधिकस्याङ्गत्वे 'देवदत्त ओदन मपाक्षीत्' इत्यादौ देवदत्तादिशब्दोत्तरं सुपं निमित्तीकृत्य लुङ्परत्वेन देवदत्ता शब्दात् पूर्वमप्यडागमापत्तेश्च।

रामस्य (ई. ५५)—रामशब्दात् ङसि 'टाङसिङसामिनात्स्याः' इ स्यादेशे 'रामस्य' इति। नन्वत्र सकारस्य 'अनचि च' इति द्वित्वे पूर्वसकारस्य 'ख च' इति चर्त्वेन दन्तस्थानतोऽन्तरतमे तकारे सति 'रामत्स्य इति स्यादिति चेन सकारस्थानी महाप्राणः, तकारस्तु अल्पप्राणः इति बाह्यप्रयत्नभेदात् आभ्यन्त प्रयत्नभेदाच्च सस्य तत्त्वाभावात्। अत एव 'घत्स्यति' इत्यादौ 'सः स्यार्धधातुके इत्यनेन सकारस्य तकारविधानं चरितार्थम्।

✓ रामाणाम (ई. ४४, ४७, ५६, ६०)—राम शब्दात् आमि 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इ णत्वे 'रामाणाम्' इति। नन्वत्र 'राम नाम्' इति स्थिते 'फलविशेषाऽभावेऽ न्यायानुरोधेनैव शास्त्रप्रवृत्तेः' इति भाष्योक्त्या परत्वात् 'सुपि चे'ति दीर्घः कु नेति चेन्न, सन्निपातपरिभाषाविरोधात्। तथा हि—ह्रस्वान्तसन्निपातमुपजी प्रवृत्तस्य नुटः ह्रस्वविघातकं 'सुपि च' इति दीर्घं प्रति निमित्तत्वं न स्यात् 'नामि' इत्यनेन तु आरम्भसामर्थ्यात् परिभाषा बाध्यते इत्यवगन्तव्यम्।

'फक्किकाशयस्त्वित्थम्—

नन्वत्र 'राम नाम्' इति स्थिते 'नामीत्यस्य 'हरीणाम्' इत्यादौ, 'सु चे'त्यस्य 'रामाय' इत्यादौ चारितार्थ्येन तुल्यबलविरोधिना परेण 'विप्रतिषेधे कार्यम्' इति शास्त्रबलात् बाधप्रसङ्गे कथं 'नामि' इति दीर्घोल्लेखः इति चे 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषया ह्रस्वान्ताङ्गं निमि कृत्य जायमानस्य नुटो ह्रस्वान्ताङ्गविघातकदीर्घप्रवृत्तिं प्रति अनिमित्तत्वबोधं यञादित्वधर्मपुरस्कारेण प्रवर्तमानस्य 'सुपि चे'ति शास्त्रस्याप्राप्तेः। नचैवं नाम

नुटमूलकत्वात् तद्धर्मपुरस्कारेण प्रवर्तमानस्य 'नामी'ति शास्त्रस्य सन्निपातपरिभाषया नुटोऽनिमित्तत्वबोधनेन कथं प्रवृत्तिरिति वाच्यम्, 'नामि' इति सूत्रविषये सन्निपातपरिभाषाप्रवृत्तौ ह्रस्वान्ताङ्गनिमित्तकनुटमूलकनाम्त्वधर्ममादाय प्रवर्तमानस्य 'नामी'ति सूत्रस्य वैयर्थ्यापातेन तत्सामर्थ्यात् सन्निपातपरिभाषया 'नामी'त्यनेन बाधो जायेत इति कल्पनात्।

नच 'कतीनाम्' इत्यत्र ह्रस्वान्तसन्निपातमुपजीव्यैव 'षट्चतुर्भ्यश्च' इत्यनेन नुड् भवति, एवञ्च तत्र दीर्घार्थं 'नामि' इति सूत्रस्य सावकाशत्वेन आरम्भसामर्थ्यादिति मूलोक्तमसंगतमिति वाच्यम्। 'न ह्येकमुदाहरणं योगारम्भं प्रयोजयति' इति भाष्यस्य जागरूकत्वात् (एकस्य शब्दस्य साधनाय सामान्यसूत्रं नारम्भणीयमिति तदर्थः)।

सर्वे (ई. २८, ५२)—सर्वशब्दाद् जसि 'सर्वादीनि सर्वनामानि' इति सर्वनामसंज्ञायां 'जसः शी' इति श्यादेशे 'आद्गुणः' इति गुणे 'सर्वे' इति।

ननु यथा 'अर्वणस्त्रसावनञः' इति सूत्रेण 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषया नकारस्यैव आदेशो भवति, तथैव अत्रापि शकारस्येत्संज्ञायामुक्तपरिभाषया अनेकाल्त्वाभावेन 'शित्वात् सर्वादेशः' इत्येवमूले वक्तुमुचितमिति चेन्न, सति सर्वादेशे स्थानिवद्भावेन प्रत्ययत्वमादाय इत्संज्ञायाः प्रवृत्तेः। यावत् सम्पूर्णस्य स्थाने आदेशो न भवति तावत् प्रत्ययत्वाऽभावेन इत्संज्ञैव न स्यादिति भावः।

प्रकारान्तरम्—

अनेकाल्त्वान सर्वादेशः (ई. २८, ५२)—सर्वशब्दस्य 'सर्वादीनि सर्वनामानि' इति सर्वनामसञ्ज्ञायां तस्माज्जसि तत्स्थाने 'जसः शी' इत्यनेन विधीयमानः शी आदेशः शित्वादनेकाल्त्वाद् वा सर्वस्य स्थाने स्यादिति शङ्कायाम् 'अनेकाल्त्वादेव सर्वादेशो न तु शित्वादित्युच्यते। ननु यथा 'अर्वणस्त्रसावनञः' इति सूत्रेण 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषया नकारस्यैव आदेशो भवति, तथैवात्रापि शकारस्येत्सञ्ज्ञायामुक्तपरिभाषया अनेकाल्त्वाभावेन शित्वात्सर्वादेशः स्यादिति चेन्न, सति सर्वादेशे स्थानिवद्भावेन प्रत्ययत्वमादाय इत्सञ्ज्ञायाः प्रवृत्तेः। यावत्सम्पूर्णस्य स्थाने आदेशो न भवति, तावत् प्रत्ययत्वाभावेन इत्सञ्ज्ञैव न स्यादित्यलम्।

**सर्वेषाम्** ( ई. ४८, ५९, ६१ )—सर्वशब्दात् आमि 'आमि सर्वनाम्नः सुट्' इति सुटि 'बहुवचने झल्येत्' इति एत्वे कृते 'यदागमास्तद्ग्रहणेन गृह्यन्ते' इति सुटोऽपि प्रत्ययावयवत्वात् 'आदेशप्रत्यययोः' इति षत्वे 'सर्वेषाम्' इति। नन्वत्र एत्वे कर्तव्ये सन्निपातपरिभाषाविरोधः कुतो नेति चेन्न, 'बहुवचने झल्येत्' इत्यत्र 'झलि' ग्रहणाऽभावेऽपि 'रामाणाम्' इत्याद्यजादौ सन्निपातपरिभाषया एत्वाऽभाव सिद्धे झलिग्रहणमेत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थमित्युक्तत्वात्।

**तदन्तस्यापीयं संज्ञेति**—'सर्वादीनि सर्वनामानि' इति सूत्रे सर्वादीनीति पदस्य शब्दस्वरूपमिति विशेष्यमादाय 'द्वन्द्वे च' इति सूत्रेण विशेष्यत्वबोधनेन 'येन विधिस्तदन्तस्य' इति सूत्रसाहाय्येन सर्वादीनां सर्वाद्यन्तशब्दस्वरूपाणां च सर्वनामसंज्ञा भवतीति सूत्रार्थः। एवं च सर्वशब्दस्य यथा सर्वनामसंज्ञा तथा परमसर्व इत्यस्यापि। तेन परमसर्वशब्दात् त्रल् सिद्ध्यति। एवं सर्वादिगणपठितक शब्दान्तस्य सर्वनामसंज्ञायाम् अकचि 'परमभवकान्' इति च सिद्धम्। तदन्तविध्यभावे 'वर्णाश्रमेतरा' इत्यस्य सर्वादिघटकत्वाभावेन सर्वनामसंज्ञाया अप्राप्तौ तन्निषेधकं 'द्वन्द्वे च' इति सूत्रं व्यर्थमेव स्यात्, तदेव व्यर्थं सत् 'तदन्तस्यापीयं संज्ञे'ति ज्ञापयतीति दिक्।

**सर्वादिगणे उभशब्दपाठः किमर्थः** ( ई. ३३ )—ननु सर्वादिप्रयुक्त कार्याणामेकवचनबहुवचनयोरेव विधानादत्रोभशब्दपाठो व्यर्थ इति चेन्न, उभकावित्यत्राव्ययसर्वनाम्नामकजिति अकज्विधानार्थन्तस्याऽऽवश्यकत्वात्। न च स्वार्थे कप्रत्ययेनोक्तरूपसिद्धिरिति वाच्यम्, द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविव वात्रापि 'उभादुदात्तो नित्यमि'त्यत्र नित्यमिति योगविभागेनायच्प्रसङ्गात्, अकचि तु तन्मध्यपतितन्यायेन द्विवचनपरत्वान्न दोष इति।

**उभयशब्दस्येति**—उभयोऽन्यत्रेति वार्तिकस्योभयो मणिरुभये देवमनुष्या इत्युदाहरणदानपरकभाष्येण उभयशब्दस्य तद्धितश्चासर्वविभक्तिरित्यनेनाव्ययसंज्ञा वारणार्थं तसिलादय इत्यादिपरिगणनेन चोभयशब्दस्य द्विवचने रूपमनभिधानमिति कैयटाशयः। न चोदाहरणमादरणीयमिति भाष्येण पचतिरूपं पचतिकल्पमिति परिगणनफलदानेन च द्विवचने रूपं भवत्येवेति हरदत्ताशयः।

**डतरडतमप्रत्ययौ**—सर्वादिगणे डतरडतम इति प्रत्यययोर्ग्रहणेन केवलस्य प्रत्ययस्य प्रयोगाभावे 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति तदन्तविधौ डतरप्रत्ययान्त

ञ्तमप्रत्ययान्तयोः कतरकतमादिशब्दयोरेव सर्वनामसञ्ज्ञा, नतु केवलयोस्तयोः । न च 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति 'सुप्तिङन्तम्' इत्यन्तग्रहणाज्ज्ञापकात् तेन तदन्तयोर्ग्रहणं न स्यादिति वाच्यम् । केवलयोः सञ्ज्ञायाः प्रयोजनाभावात् ।

उभये ( ई. ३६, ४९ )—उभौ अवयवौ येषामित्यर्थे संख्याया अवयवे तयबिति तयपः उभादुदात्तो नित्यमित्ययजादेशे ततो जसि स्थानिवत्वेन तयप्प्रत्ययान्ततया प्रथमचरेति विकल्पेन प्राप्तसंज्ञाया विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् सर्वादीनीत्यनेन सर्वनामसंज्ञां प्रत्यसिद्धत्वादनेन नित्यसंज्ञायां जसः शीति श्यादेशे गुणे उभये इति ।

स्वाभिधेयापेक्षावधिनियमो व्यवस्था—अयम्भावः, 'पूर्वपरे'ति सूत्रे स्वस्य पूर्वादिशब्दस्याभिधेयं वाच्यं तेन अपेक्षस्याऽपेक्ष्यमाणस्य अवधेर्नियमः व्यवस्थाशब्देन विवक्षितः इत्यर्थः । तेन 'दक्षिणा गाथकाः' इत्यत्र कुशलवाचिदक्षिणशब्दस्य सर्वनामसंज्ञा नेति ।

प्रकारान्तरम्—

स्वाभिधेयापेक्षावधिनियमो व्यवस्था—अयमर्थः, स्वस्य पूर्वादिशब्दस्य अभिधेयेन वाच्यार्थेन नियमेनावधिरपेक्षते तादृशो नियमो व्यवस्था, तद्वाचिपूर्वादिशब्दानां सर्वनामसंज्ञा भवतीति सूत्रार्थः । पूर्वादिशब्दे उच्चारिते कस्मात् पूर्वः कस्मात् परः इत्यादिनियमेनावधिसापेक्षोऽर्थं इति यावत् । 'पूर्वपरावर' इति सूत्रे व्यवस्थापदाभावे कुशलवाचिदक्षिणशब्दस्यापि सर्वनामसंज्ञा स्यात्, सा माभूदिति तत्र व्यवस्थाग्रहणम् । कृते तु तस्मिन् कुशलार्थस्य कस्मात् कुशलः इति कदाचित् अवध्यपेक्षत्वेऽपि कुशलमात्रप्रतिपादनेच्छोच्चरितदक्षिणशब्दार्थस्य अवध्यपेक्षत्वाभावेन नियमेनावधिसापेक्षार्थकत्वाभावात् सर्वनामसंज्ञा न भवतीति 'दक्षिणाः' इति एकमेव रूपम् । यदि च इह अमुकस्मात् कुशलः इति अवध्यन्वयसम्भवेन अस्तीह व्यवस्था, तदा 'अधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्तः, इति प्रत्युदाहरणं बोध्यम् ।

स्वे ( ई. ३९ )—स्वशब्दात् जसविभक्तौ 'स्वमज्ञातिधनाख्यायाम्' इत्यनेन सर्वनामत्वे 'जसः शी' इति शीभावे गुणे 'स्वे' इति । स्वशब्दस्य चत्वारोऽर्थाः, तथा चामरः—'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति ।

अत्र 'स्वो ज्ञातावात्मनि' इत्येकं वाक्यम्। ज्ञातावात्मनि च 'स्व' शब्दः पुंल्लिङ्गः इत्यर्थः, 'स्वं त्रिष्वात्मीये' इति द्वितीयं वाक्यम्। आत्मीये स्वशब्दको विशेष्यनिघ्न इत्यर्थः। 'स्वोऽस्त्रियां धने' इति तृतीयं वाक्यम्। धने स्वशब्दः पुन्नपुंसक इत्यर्थः। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशः।

त्वत्कपितृकः (ई. ३७, ४५)—त्वकं पिता यस्य अहकं पिता यस्येति लौकिकविग्रहे युष्मद् सु पितृ सु, अस्मद् सु पितृ सु—इत्यलौकिकविग्रहे बहुव्रीहि-समासात् प्रागेव न बहुव्रीहाविति सर्वनामसंज्ञानिषेधेऽकचोऽप्राप्त्या के, प्रत्ययोत्तरप-दयोश्चेति त्वमादेशे नद्यृतश्चेति कपि त्वत्कपितृको मत्कपितृक इति सिद्धम्। न बहुव्रीहावित्यस्याभावे भवकन्तमतिक्रान्तोऽतिभवकानित्यत्रेव समासेऽप्यकचः श्रव-णापत्तावुक्तरूपासिद्धेरिति पाणिनिमतम्। भाष्यकारस्तु 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इत्युक्त्वा त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वा न बहुव्रीहाविति सूत्रं प्रत्याचख्यौ, एवं च यथोत्तरं मुनीनां प्रामाण्यमिति बलाद् भाष्यकारमतस्यैव प्रामाण्यमिति बोध्यम्।

संज्ञोपसर्जनीभूतास्तु न सर्वादयः (ई. ५४)—'सर्वादीनि सर्वनामानि' इति सूत्रे सर्वनाम इति महासंज्ञाकरणेन तस्याश्चान्वर्थतया सर्वान्नमयन्ति सर्वेषां नामानि इति वा विग्रहेण प्राधान्येन—इतराविशेषणत्वेन, स्वीयसर्वार्थोपस्थापक इत्यर्थलाभात् तादृशसर्वादिगणपठितशब्दानामेव सर्वनामसंज्ञा। सर्वनामसंज्ञोद्देश्य-सर्वादीनां शब्दानां प्राधान्येन स्वीयसर्वार्थोपस्थापकानामेव च गणे सन्निवेशेन त्यदादयः शब्दा अपि तादृशा एव पठ्यन्ते इति 'त्यदादीनामः' इत्यत्वं 'तदोः सः सावनन्त्ययोः' इति सत्वम्, 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यदड्डादेशश्च तादृशार्थो-पस्थापकशब्दानामेवेति संज्ञायामुपसर्जनत्वे च सर्वादीनामसंज्ञा अत्वं सत्वम् अद्-ड्डादेशश्च न भवन्तीति क्रमेण सर्वो नाम कश्चित् तस्मै सर्वाय देहि अतिक्रान्तः सर्वम् अतिसर्वः तस्मै अतिसर्वाय देहि। अतिकतरं कुलम्, अतितत्, इत्यु-दाहरणानि।

वर्णाश्रमेतराणाम् (ई. ४३, ४७, ५५, ५७)—वर्णश्चाऽऽश्रमश्चेतरश्चे-त्येतेषामितरेतरयोगद्वन्द्वादामि सर्वाद्यन्तत्वेन सर्वादीनीति प्राप्तसंज्ञायां द्वन्द्वे चेति निषेधे सुटोऽप्राप्त्या नुटि दीर्घे णत्वे च वर्णाश्रमेतराणामिति। न चानेन समुदा-यस्य निषेधेऽपि अवयवस्य निषेधाभावात् 'आमि सर्वनाम्नः' इति सूत्रे तदन्तविधिना

अवर्णान्तसर्वनामान्तात्परस्यामः सुडित्यर्थे सुट् स्यादेवेति वाच्यम्, सर्वनाम्नो विहितस्यामः सुडिति भाष्यव्याख्यानेनादोषात् ।

अयम्भावः—वर्णश्च आश्रमश्च इतरश्चेति वर्णाश्रमेतराः, तेषां वर्णाश्रमेतराणाम् । अत्र वर्णाश्रमेतरशब्दात् आमि नुटि 'नामी'ति दीर्घे णत्वे उक्तं रूपं सिद्धम् । नन्वत्र 'वर्णाश्रमेतर' इति समुदायस्य तदन्तविधिना 'सर्वादीनि सर्वनामानि' इत्यनेन सर्वनामसंज्ञा कुतो नेति चेन्न, 'द्वन्द्वे च' इत्यनेन निषेधात् । न च प्रकृतसूत्रेण वर्णाश्रमेतर इति समुदायस्य सर्वनामसंज्ञानिषेधेऽपि 'इतर' शब्दस्य सर्वनामत्वमस्तीति ततः परस्य आम्विभक्तेः 'आमि सर्वनाम्नः सुट्' इति सुट् कुतो नेति वाच्यम्, तत्र सूत्रे सर्वनाम्नः इति पञ्चम्याः विहितविशेषणत्वस्वीकारेण अवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामः सुट् भवतीत्यर्थेनाऽत्र इतरशब्दात् सुटो विहितत्वाभावेन तदप्रवृत्तेः ।

स्वे (ई. ३९)—स्वशब्दात् जसविभक्तौ 'स्वमज्ञातिधनाख्यायाम्' इत्यनेन सर्वनामत्वे 'जसः शी' इति शीभावे गुणे 'स्वे' इति । स्वशब्दस्य चत्वारोऽर्थाः, तथा चामरः—'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति । अत्र 'स्वो ज्ञातावात्मनि' इत्येकं वाक्यम् । ज्ञातावात्मनि च 'स्व' शब्दः पुंल्लिङ्गः इत्यर्थः, 'स्वं त्रिष्वात्मीये' इति द्वितीयं वाक्यम् । आत्मीये स्वशब्दो विशेष्यनिघ्न इत्यर्थः । 'स्वोऽस्त्रियां धने' इति तृतीयं वाक्यम् । धने स्वशब्दः पुन्नपुंसक इत्यर्थः ।

अतिसर्वाय—अतिक्रान्तः सर्वमतिसर्वः तस्मै 'अतिसर्वाय' इति । अत्र अन्यविशेषणत्वेन 'स्वार्थोपस्थापकत्वमुपसर्जनत्वमि'त्युपसर्जनलक्षणसत्त्वेन सर्वशब्दस्य समासे उपसर्जनीभूतत्वात् 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति निषेधात् सर्वनामसंज्ञाऽभावेन स्मायादेशाऽप्राप्त्या 'ङेर्यः' इति ङेर्यादेशे 'सुपि चे'ति दीर्घे 'अतिसर्वाय' इति सिद्धम् ।

ननु प्रतिपदोक्तपरिभाषया अतिसर्वशब्दस्य सर्वनामसंज्ञाप्राप्तिरेव कथमिति चेन्न; एवं सति 'वर्णाश्रमेतराणाम्' इत्यादौ वर्णाश्रमेतरशब्दस्याऽपि सर्वनामत्वाऽभावादेव सुटोऽप्राप्त्या 'द्वन्द्वे चे'ति सूत्रं व्यर्थं स्यात्, तदेव व्यर्थीभूय ज्ञापयति 'तदन्तस्यापीयं संज्ञा' इति ।

मासपूर्वाय (ई. ५३)—मासेन पूर्वाय इति विग्रहः । अत्र 'तृतीयासमासे' इति सूत्रेण सर्वनामसंज्ञानिषेधात् स्मायादेशाऽप्राप्त्या 'ङेर्यः' इति ङेर्यादेशे 'सुपि चे'ति दीर्घे 'मासपूर्वाय' इति सिद्धम् ।

अत्राऽपि 'द्वन्द्वे चे'ति ज्ञापकात् तदन्तस्य ( मासपूर्वशब्दस्य ) सर्वनामसंज्ञा प्राप्तेत्यवसेयम् ।

वर्णाश्रमेतरकाः ( ई. ३६, ५१ )—द्वन्द्वसमासनिष्पन्नात् वर्णाश्रमेतरशब्दात् कप्रत्यये कृते 'वर्णाश्रमेतरकः' इति । तस्मात् जसि अनुबन्धलोपे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् । ननु वर्णाश्रमेतरशब्दात् अकच् कुतो नेति चेन्न, 'सर्वादीनि' इत्यनेन प्राप्तसर्वनामसंज्ञायाः 'द्वन्द्वे च' इत्यनेन निषेधात् । न च 'विभाषा जसि' इति विभाषया सर्वनामसंज्ञासत्वे अकच् स्यादिति वाच्यम् , 'विभाषा जसि' इत्यनेन शीभावे कर्तव्ये एव विभाषया सर्वनामसंज्ञाविधानात् ।

निर्दिश्यमानस्येति—अयम्भावः, 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया 'जराया जरस्' इति सूत्रेण निर्जरसमुदायस्य जरसादेशे प्राप्ते 'निर्दिश्यमानस्यादेशा भवन्ति' 'अनेकाल्शित्सर्वस्य' इति परिभाषाभ्यां जराशब्दस्यादेशो भवति । नन्वेवमपि निर्जरघटकजरशब्दो जराशब्दः कथमिति चेन्न, 'एकदेशविकृतमनन्यवत्' इति न्यायस्य जागरूकत्वात् ।

निर्जरसौ ( ई. ५३ )—निर्जरशब्दात् औविभक्तौ 'जराया जरसन्यतरस्याम्' इति जरसादेशे 'निर्जरसौ' इति । नच जराशब्दस्य विधीयमानो जरसादेशः निर्जरशब्दे कथमिति वाच्यम् , जरसादेशस्य अङ्गाधिकारस्थत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया निर्जरशब्दस्याऽपि जरसादेशोचितत्वात् , नन्वेवमपि जराशब्दान्तस्य विधीयमानो जरसादेशः अनेकाल्त्वात् निर्जरशब्दस्य कृत्स्नस्यैव स्यादिति चेन्न, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषायाः जागरूकत्वात् । नन्वेवमपि निर्जरशब्दस्य जराशब्दान्तत्वं कथमिति वाच्यम् , एकदेशविकृतमनन्यवत्' इति परिभाषया अर्थात् 'छिन्ने पुच्छेऽपि श्वा श्वैव, नाऽश्वो नच गर्दभः' इति न्यायेन निर्जरशब्दान्तत्वस्य सुलभत्वात् । जरसादेशाभावपक्षे तु 'वृद्धिरेऽचि' इति वृद्धौ 'निर्जरौ' इति ।

निर्जरसा ( ई. ३७, ४६ )—निर्जरशब्दात् तृतीयैकवचने 'निर्जर आ' इति स्थिते 'टाङसिङसामिनात्स्याः' इत्यनेन इनादेशे प्राप्ते 'जराया जरसन्यतरस्याम्' इत्यनेन जरसादेशे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इत्यनेन इनादेशं बाधित्वा परत्वाज्जरसादेशे उक्तं रूपं सिद्धम् । यत्तु 'विप्रतिषेधे परमि'त्यत्र अपरमिति प

छित्वा, अपरमित्यस्य इष्टं कार्यं भवतीत्यर्थं विधाय, पूर्वविप्रतिषेधेन इनादेशे कृते सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य 'निर्जरसिन्' इत्युक्तं तद्भाष्यविरुद्धमिति कौमुद्यां प्रतिपादितम् ।

निर्जरसे (ई. ४९, ५६)—निर्जरशब्दाच्चतुर्थ्येकवचने 'जराया जरसन्यतरस्याम्' इत्यनेन जरसादेशे उक्तं रूपं सिद्धम् । ननु 'जरा' शब्दस्य विधीयमानो जरसादेशः निर्जरशब्दे कथमिति चेन्न, जरसादेशस्य अंगाधिकारस्थत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इतिपरिभाषया निर्जरशब्दस्याऽपि जरसादेशोचितत्वात् । नचैवमपि जराशब्दान्तस्य विधीयमानो जरसादेशः अनेकाल्वात् निर्जरशब्दस्य कृत्स्नस्य स्यादिति चेन्न, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषायाः जागरूकत्वात् । नचैवमपि निर्जरशब्दस्य जराशब्दान्तत्वं कथमिति वाच्यम्, 'एकदेशविकृतमनन्यवत्' इति मरिभाषाया अर्थात् छिन्नेऽपि पुच्छे श्वा श्वैव, न चाऽश्वो न च गर्दभः' इति न्यायेन निर्जरशब्देऽपि जराशब्दान्तत्वस्य सुलभत्वात् ।

निर्जरसिन् (ई. ४८)—जरसादेशाद्विभक्त्यादेशाः पूर्वविप्रतिषेधेन भवन्तीति स्वीकृत्य सन्निपातपरिभाषायाश्च 'अतो मिस ऐस्' इति सूत्रेऽदन्तात्परस्य मिस ऐसादेशविधानेन वृद्धय्‌थसिद्धावैसकरणसामर्थ्येन जरासादेशविषये अनित्यत्वमाश्रित्य निर्जरशब्दात् तृतीयैकवचने टाप्रत्यये पञ्चम्येकवचने ङसि प्रत्यये वा पूर्वमिनादेशे 'आत्' आदेशे च कृते सन्निपातपरिभाषायाः अनित्यत्वेनाप्रवृत्त्या जरसादेशे 'निर्जरसिन्' निर्जरसात्' इति केषाञ्चिन्मतं वृत्तिकारेणोक्तम् । तन्मते च तृतीयाबहुवचने जरसादेशात्पूर्वं भिसः स्थाने ऐसादेशे सन्निपातपरिभाषायाः अनित्यत्वेन जरसादेशे 'नर्जरसैः' इति रूतं भवतीत्युक्तम् । तदनुसारिभिश्च पूर्वं ङसः स्यादेशेऽजादित्वाभावेन जरसादेशाप्रवृत्त्या 'निर्जरस्य' इत्येवं रूपं भवतीति स्वीकृतम् । परन्तु सर्वमेतद्भाष्यविरुद्धम् । भाष्यकृता हि इनादेशस्येकारस्य 'आत्' आदेशस्य च दीर्घकरणं प्रत्याख्यातम् । 'ओसि च' इत्येत्सूत्रात्परत्र 'आङ्गि चापः' इत्यत्र आङि' इति योगं विभज्य आङि परेऽत भवतीत्यर्थेन रामशब्दात् टाप्रत्ययस्य स्थाने 'न' आदेशे एत्वे णत्वे च कृते 'रामेण' इति, रामशब्दात् ङसप्रत्ययस्य 'अत्' आदेशेऽकारोच्चारणसामर्थ्येन 'अतो गुणे' इति पररूपबाधे सवर्णदीर्घेण च 'रामात्' इति च रूपसिद्धेः । तथा च तन्मते 'नर्जरसिन्' इत्यादिरूपासिद्धेः प्रत्याख्यानासंगतिः स्यादतो जरसादेशः परत्वाद् विभक्त्यादेशेभ्यः पूर्वं भवतीत्येव सद्धान्त इति ।

## निर्जरशब्दस्य रूपाणि ( ई. ३५ )—

| | | |
|---|---|---|
| निर्जरः | निर्जरसौ, निर्जरौ | निर्जरसः, निर्जराः |
| निर्जरसम्, निर्जरम् | निर्जरसौ, निर्जरौ | निर्जरसः, निर्जरान् |
| निर्जरसा, निर्जरेण | निर्जराभ्याम् | निर्जरैः |
| निर्जरसे, निर्जराय | ,, | निर्जरेभ्यः |
| निर्जरसः, निर्जरात्–द् | ,, | ,, |
| निर्जरसः, निर्जरस्य | निर्जरसोः, निर्जरयोः | निर्जरसाम्, निर्जराणाम् |
| निर्जरसि, निर्जरे | ,, ,, | निर्जरेषु |
| हे निर्जर | हे निर्जरसौ, हे निर्जरौ | हे निर्जरसः, हे निर्जराः |

पदः ( ई. ४५ )—पादशब्दाच्छसि 'पद्दन्नोमास–' इति पादशब्दस्य विभाषया पदादेशे सस्य रुत्वे विसर्गे 'पदः' इति । पक्षे पूर्वसवर्णदीर्घे 'तस्माच्छसो नः–' इति नत्वे 'पादान्' इति ।

पदा ( ई. ४२ )—पादशब्दस्य तृतीयैकवचने 'पद्दन्न–' इति पदादेशे 'पदा' इति । पक्षे 'टाङसिङसाम्–' इति इनादेशे 'आद्गुणः' इति गुणे 'पादेन' इति ।

स्वादिष्वसर्वनामस्थाने ( ई. ४६, ५० )—कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यादित्यर्थः । 'दद्भ्याम्' 'राजभ्याम्' इत्याद्युदाहरणानि । तत्र 'दत् भ्याम्' इति स्थिते अनेन पदत्वाज्जश्त्वसिद्धिः । एवं 'राजन् भ्याम्' इति स्थिते अनेन पदत्वान्नलोपसिद्धिः ।

दतः ( ई. ४७, ५२ )—दन्तशब्दात् शसि 'दन्त अस्' इति स्थिते 'पद्दन्नोमास' इति सूत्रेण ददादेशे 'दत् अस्' इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इत्यनेन पदसंज्ञायां 'यचि भम्' इत्यनेन भसंज्ञायां च प्राप्तायाम् 'आ कडारादेका संज्ञा' इति नियमात् शसादावचि भसंज्ञस्यैव प्राबल्येन पदत्वाभावेन जश्त्वाऽभावे सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

दता ( ई. ४२, ५४ ) दन्तशब्दात् टाविभक्तौ 'पद्दन्नोमासहृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छसप्रभृतिषु' इति सूत्रेण दन्तशब्दस्य 'दत्' आदेशे 'दत् आ' इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इत्यनेन पदसंज्ञा, 'यचि भम्' इत्यनेन

भसंज्ञा च प्राप्ता 'आकडारादेका संज्ञा' इति सहकारेण अनवकाशत्वेन भसंज्ञया बाधात् जश्त्वाप्राप्त्या 'दता' इति रूपं सिद्धम् ।

मासा ( ई. ५४, ५७ )—मासशब्दात् तृतीयैकवचने 'पद्दन्–' इति सूत्रेण 'मास्' इत्यादेशे 'मासा' इति जातम् ।

माभ्याम् ( ई. ३५, ४४, ५५ )—मासशब्दात् भ्यामि 'पद्दन्' इति सूत्रेण मासशब्दस्य 'मास्' इत्यादेशे 'स्वादिष्वि'ति पदत्वे 'ससजुषो रुः' इति सकारस्य रुत्वे 'भोभगो' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे उक्तं रूपं जातम् ।

माभिः ( ई. ५४ )—मासशब्दात् तृतीयाबहुवचने 'पद्दन्—' इति सूत्रेण 'मास्' इत्यादेशे 'स्वादिष्वि'ति पदत्वात् सस्य रुत्वे 'भभोगो—' इति यत्वे 'हलि सर्वेषाम्' इति यलोपे यस्य रुत्वे विसर्गे 'माभिः' इति ।

यूष्णः ( ई. ४३, ४८ ५१, ५२, ६१ )—यूषशब्दाच्छसि 'पद्दन्' इत्यादिसूत्रेण यूषशब्दस्य 'यूषन्' आदेशे 'यूषन् अस्' इति स्थिते भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनेनाल्लोपे 'यूष्न् अस्' इति स्थिते 'अचः परस्मिन् पूर्वविधौ' इत्यत्र 'पूर्वस्माद्विधिः पूर्वविधिः' इति पञ्चमीसमासाश्रयणेन षकारात् परस्य नकारस्य णत्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावेन अकारव्यवधानात् 'रषाभ्याम्' इत्यस्य प्रवृत्त्यभावेऽपि 'अट्कुप्वाङ्नुम्व्यवायेपि' इत्यनेन अड्व्यवायेऽपि णत्वे सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

यूषभिः ( ई. ३४ )—यूषशब्दात् भिसि 'पद्दन्नोमास' इत्यादिसूत्रेण यूषशब्दस्य यूषन्नादेशे 'स्वादिष्वि'ति पदत्वे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे ततो नलोपस्याऽसिद्धत्वात् 'अतो भिस ऐस्' इत्यस्याप्रवृत्तौ सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

युषभ्यः ( ई. ४ )—यूषशब्दात् भ्यसि 'पद्दन्' इति सूत्रेण यूषशब्दस्य यूषन्नादेशे 'स्वादिष्वि'ति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'यूष भ्यस्' इति स्थिते नलोपस्यासिद्धत्वात् 'बहुवचने झल्येत्' इत्यस्याप्राप्त्या सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

यूष्णि ( ई. ४०, ५३ )—यूषशब्दात् ङिविभक्तौ पद्दन्निति यूषन्नादेशे 'विभाषा ङिश्योः' इति 'अन्' इत्यस्य लोपे 'रषाभ्या'मिति णत्वे 'यूष्णि' इति, लोपाभावपक्षे 'यूषणि' इत्यपि भवति ।

पद्दन्नोमासेति ( ई. ४१ )—पद्दन्निति सूत्रे प्रभृतिग्रहणस्य प्रकारोऽर्थः। प्रकारः = सादृश्यम्, तच्च सुप्त्वधर्मेण। तथा च यत्र सुप्त्वं स्यात्तत्रादेशा भवन्ति। एवञ्च दोषशब्दस्य नपुंसकलिङ्गे औङः श्यादेशे दोषन्नादेशो भवति। अत एव 'ककुद्दोषणी' इति भाष्योदाहरणं सङ्गच्छते। एवं च प्रभृतिग्रहणस्य प्रकारार्थत्वेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यादौ सुविभक्तौ परे पादशब्दस्य पदादेशः सिद्ध्यति। अन्यथा शसादावेव स्यात्, तथा च उक्तभाष्योदाहरणम्, 'पदङ्घ्रिश्चरणः' इत्यमरकोशस्थ 'पद' इति रूपञ्चासंगतं स्यात्।

प्रभृतिग्रहणं प्रकारार्थम् ( ई. ४१ )--अयमाशयः, 'पद्दन्नि'ति सूत्रे प्रभृति-पदस्य प्रकारोऽर्थः। प्रकारो भेदसादृश्यम्। सादृश्यं चात्र सुप्त्वधर्मेण गृह्यते। तथा च यत्र सुप्त्वं स्यात्तत्रादेशा भवन्ति। एवं च दोषशब्दस्य नपुंसकलिङ्गे औङः श्यादेशे दोषन्नादेशो भवति। ततश्च 'ककुद्दोषणी' इति भाष्योदाहरणं सङ्गतम्भवति एवमेव 'पदङ्घ्रिश्चरणः' इत्यादौ सुविभक्तौ पादशब्दस्य पदादेशश्च सिद्धः।

द्व्यह्नि ( ई. ४५, ५५ )—द्वयोरह्नोर्भवः इति विग्रहे 'तद्धितार्थ' इति समासे 'कालाट्ठञ्' इति ठञि तस्य 'द्विगोर्लुगनपत्ये' इति लुकि 'राजाहः सखिभ्यष्टच्' इति टचि 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशे यणि 'द्व्यह्न' इति; तस्मात् द्व्यह्नशब्दात् ङौ 'संख्याविसायपूर्वस्याह्नस्याऽहन्नन्यतरस्यां ङौ' इति सूत्रेण अहन्नादेशे निमित्ता-पाये नैमित्तिकस्याप्यपाये 'द्वि अहन् इ' इति जाते 'विभाषा ङिश्योः' इत्यनेन अल्लोपे इकारस्य यणि 'द्व्यह्नि' इति। अल्लोपाभावे 'द्व्यहनि' इति। अहन्नादेशा-भावे गुणे 'द्व्यह्ने' इति च भवति।

व्यहनि (ई. ३९, ५२)—विगतमहः इति विग्रहे 'प्रादयो गताद्यर्थे प्रथमया' इति समासे सति 'राजाहः सखिभ्यष्टच्' इति टचि अह्नादेशे यणि 'व्यह्न' इति, तस्य सप्तम्येकवचने व्यह्नि–व्यहनि–व्यह्ने इति त्रीणि रूपाणि भवन्ति। तद्यथा व्यह्न-शब्दात् ङिविभक्तौ 'संख्याविषायपूर्वस्याह्नस्याऽहन्नन्यतरस्यां ङौ' इति पाक्षिके अहन्नादेशे 'विभाषाङिश्योः' इति पाक्षिकेऽल्लोपे 'व्यह्नि' इति। अल्लोपाभावपक्षे 'व्यहनि' इति। अहन्नादेशाभावे तु 'आद्गुणः' इति गुणे 'व्यह्ने' इति।

विश्वपः ( ई. ३३ )—विश्वपाशब्दात् द्वितीयाबहुवचने 'विश्वपा अस्' इति स्थिते 'स्वादिष्वि'ति सर्वनामस्थानभिन्नस्वादिषु शसादिषु परेषु पूर्वस्य विश्वपा

शब्दस्य पदसंज्ञायां 'यचि भम्' इत्यने सर्वनामस्थानभिन्नयजादिषु स्वादिषु परेषु भसंज्ञायां च प्राप्तायां किमत्र विधेयम् इति शङ्कायाम् 'आकडारादेका संज्ञा' इत्यनेन एकैव संज्ञा भवतीति नियमात् परत्वादनवकाशत्वाच्च भसंज्ञायां सत्याम् 'आतो धातोः' इत्यनेन पूर्वसवर्णदीर्घं प्रबाध्य 'अलोन्त्य'परिभाषया पकारोत्तरवर्त्याकारस्य लोपे सस्य रुत्वे विसर्गे 'विश्वपः' इति ।

यू किं मात्रे—यूग्रहणाभावे अदन्तशब्दे इनादेशादिना बाधात् घिसञ्ज्ञाफलस्य नाभावादेर्न प्रवृत्तिः । ऋदन्तशब्दे च 'ऋतो ङिसर्वनामस्थानयोः' इति सूत्रे, ङिग्रहणेन ङित्सु ऋदन्तस्य गुणश्चेत्तर्हि ङावेवेति नियमेन गुणादिर्न अभविष्यदिति यूग्रहणफलं परिच्छेतृवाचकमातृशब्दात् टाविभक्तौ परे नाभावाभाव इत्यलम् ।

हरौ ( ई. ५७ )—हरिशब्दात् सप्तम्येकवचने 'हरि इ' इति स्थिते 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे प्राप्ते तम्प्रबाध्य 'अच्च घेः' इति ङेरौत्वे घिसंज्ञकस्याकारान्तादेशे च कृते 'हर औ' इति स्थिते 'वृद्धिरेचि' इति वृद्धौ 'हरौ' इति ।

ग्रामणीः ( ई. ५३ )—'हल्ङ्याब्भ्यो दीर्घात्—' इति सूत्रे हल्ङ्याब्भ्यः किमिति प्रश्ने आह 'ग्रामणीः' इति । ग्रामं नयतीति विग्रहे क्विपि 'अग्रग्राम्भ्यां नयतेर्णो वाच्यः' इति णत्वे विभक्तिकार्ये 'ग्रामणी स' इति स्थिते अत्रापि सुलोपः स्यादिति ।

दीर्घात्किमिति—हल्ङ्याबिति सूत्रे दीर्घग्रहणाभावे निष्कौशाम्बिरतिखट्वः इत्यत्र गोस्त्रियोरिति ह्रस्वे स्थानिवत्त्वेन ङीप्त्वाप्त्वे आदाय सुलोपापत्तेः, दीर्घग्रहणे कृते तु दीर्घत्वधर्मस्याल्मात्रवृत्तित्वेनानल्विधाविति निषेधान्न दोष इति ।

हल् किम् ( ई. ४७ )—ननु अनङ्सावित्यत्र सोर्ङिति न्यासेन सखेति सिद्धौ हल्ङ्याबिति सूत्रे हल्ग्रहणं व्यर्थम्, राजेत्यादौ संयोगान्तलोपेनैव सिद्धेरिति चेन्न, संयोगान्तलोपस्यासिद्धत्वान्नलोपानापत्तेरिति ।

सखा (ई. ६०)—सखिशब्दात् प्रथमैकवचने सौ 'यस्मात्प्रत्यय—' इत्यङ्गसंज्ञायाम् 'अनङ्सौ' इति 'ङिच्चे'ति सूत्रबलात् सखिशब्दान्तस्य इकारस्य अनङि अनुबन्धलोपे 'सखन् स' इति जाते 'अलोन्त्यात् पूर्व उपधा' इत्युपधासंज्ञायां 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्युपधायाः 'सखान् स' इति स्थिते 'अपृक्त एकाल् प्रत्ययः

इति सस्य अपृक्तसंज्ञायां 'हल्ङ्याभ्यः–' इति सलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'सखा' इति।

सख्युः ( ई. ३९ )—सखिशब्दात् ङसि विभक्तौ 'इको यणचि' इति यणि 'ख्यात्यात्परस्य' इत्यनेन विभक्तेरकारस्योत्वे सस्य रुत्वे विसर्गे 'सख्युः' इति।

सख्यौ ( ई. ५६ )—सखिशब्दात् ङौ विभक्तौ 'औत्' इति सूत्रेण ङेरौत्वे यणि 'सख्यौ' इति।

सुसखा ( ई. २३ )—शोभनः सखेत्यर्थे समासात्सौ 'अनङ् सौ' 'सख्युरसम्बुद्धौ' इति सूत्रयोराङ्गत्वात्तदन्तेऽपि प्रवृत्त्या सुसखा इति। एवं शोभनः सखा यस्येति बहुव्रीहावपि सुसखेति। न चान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वमुपसर्जनत्वं चेति प्राचीनमते गौणत्वाद्गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति परिभाषया कथमत्रानयोः प्रवृत्तिरिति वाच्यम्, स्त्रीत्वानिमित्तत्वे सति सुब्विभक्त्यनिमित्तकत्वं पदकार्यत्वं यत्र तत्रैवोक्तपरिभाषा प्रवर्तते न तु प्रातिपदिककार्ये इत्यदोषात्।

सुसखिना ( ई. ४५, ४८, ५५, ६१ )—'शेषो घ्यसखि' इति सूत्रे 'असखि' इति पदस्य वर्णसञ्ज्ञापक्षे सखिभिन्नावयवौ याविदुतौ तयोर्घिसञ्ज्ञेत्यर्थः। तथाचात्र सुसखिशब्दस्य सखिभिन्नत्वेन तदवयवस्य इकारस्य घिसञ्ज्ञायां नादेशे च 'सुसखिना' इति सिद्धम्। सखिभिन्नं यद् इकारान्तमुकारान्तं तस्य घिसञ्ज्ञेति तदन्तपक्षेऽपि सुसखिशब्दे समुदायस्य 'सुसखि' इत्यस्य सखिभिन्नत्वात् सुलभैव घिसञ्ज्ञा। भाष्यकृन्मते तु प्रकृते घिसञ्ज्ञा नैव लभ्यते। सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोः तयोर्वा घित्वम् इत्यर्थे सुसखिघटकेकारस्य सख्यवयवत्वेन तद्भिन्नत्वाभावात् सूत्राप्रवृत्तेरिति दिक्।

सुसखौ ( ई. ५१, ५२, ५४ )—सुसखिशब्दस्य सखिभिन्नत्वेन तदवयवस्येकारस्य 'शेषो घ्यसखि' इत्यनेन घिसंज्ञायाम् 'अच्च घेः' इति ङेरौत्वे वृद्धौ उक्तं रूपं सिद्धम्।

अतिसखिः ( ई. ४८ )—सखीमतिक्रान्त इत्यर्थे समासे घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वाद्राजाहः सखिभ्यष्टजिति टचोऽप्राप्त्या गोस्त्रियोरिति ह्रस्वे समासात्स्वादौ लाक्षणिकत्वेन अनङ् सावित्यादेरप्राप्तौ अतिसखिः इति।

बहुगणेति ( ई. ३४ )—बहुश्च, गणश्च, वतुश्च, डतिश्चेति समाहारद्वन्द्वः । एतत् संख्यासंज्ञं स्यादित्यर्थः । उदाहरणं यथा—बहुकः, गणकः, यावान् , कति, इत्यादि । बहुगणशब्दाविह त्रित्वादिपरार्धान्तसंख्याव्यापकधर्मविशेषवाचिनौ गृह्येते, न तु वैपुल्यसंघवाचिनौ, संख्यायतेऽनयेति अन्वर्थसंज्ञाविधानात् । वतुडती प्रत्ययौ संज्ञाविधावपि इह तदन्तग्रहणं, केवलयोः प्रयोगार्हत्वात् ।

कति ( ई. ३५ )—का संख्या परिमाणमस्येति विग्रहे डतिः । बहुत्वविशिष्ट वाचकात् डत्यन्तात् कतिशब्दात् जसि शसि च विभक्तौ 'बहुगणवतुडतिसंख्या' इति संख्यासंज्ञायां 'डति च' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुकि 'कति' इति । नच जसि विभक्तौ 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति परिभाषया प्रत्ययलक्षणेन 'जसि च' इत्यनेन इकारस्य गुणः कुतो नेति वाच्यम् 'न लुमताऽङ्गस्य' इति प्रत्ययलक्षणनिषेधात् ।

प्रियत्रयाणाम् ( ई. ३२ )—प्रियत्रिशब्दादामि 'त्रेस्त्रयः' इति 'पदाङ्गाधिकारे'ति परिभाषया त्रिशब्दान्तस्यापि त्रयादेशे 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्—' इति णत्वे उक्तं रूपं सिद्धम् । नच 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायस्य जगरूकत्वेन त्रिशब्दस्यात्र अन्यपदार्थे विशेषणात् गौणत्वेन त्रयादेशः कथमिति वाच्यम् , गौणमुख्यन्यायस्य पदकार्यविषयत्वात् ।

द्विपर्यन्तानां किमिति—एतन्नियमाभावे सर्वादिगणपठितस्य भवच्छब्दस्य सौ विभक्तौ 'त्यदादीनामः' इति अत्वे पररूपे च कृते 'भव' इति स्यात् । न च सत्यप्यत्वे स्थानिवत्त्वेन एकदेशविकृतन्यायेन वा उगित्वान्नुम् कुतो नेति वाच्यम्, शमी, शमिनौ इत्यादिघिनुणन्ते नुमोऽभावाय झल्ग्रहणमपकृष्य उगिज्झलन्तस्यैव नुम्विधानेनाऽत्र तदप्रवृत्तेः । न च त्यदादितः पूर्वमेव भवच्छब्दस्य पाठकरणेनादोष इति वाच्यम्, स च भवांश्चेत्येकशेषे सिद्धान्ते 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति बलात् 'भवन्तौ' इति । अधुना 'त्यदादीनि सर्वैर्नित्यम्' इति बलात् 'तौ' इत्यापत्तेः ।

अयम्भावः—'त्यदादीनामः' इति सूत्रे त्यच्छब्दादारभ्य सर्वेषाम् शब्दानां ग्रहणे भवच्छब्देऽपि 'त्यदानीनामः' इति सूत्रेण तकारस्याकारे नलोपादिकार्ये च कृते 'भवा' इति रूपमनिष्टं स्यान्नतु भवानिति, भवच्छब्दस्य त्यच्छब्दात्प्राक् पाठे

कृते भवानिति रूपसिद्धेऽपि 'त्यदादीनां मिथः सहोक्तौ' इति वार्तिके भवदादीनां मिथः इति पाठेनोक्तवार्तिकेन स च भवांश्चेति विग्रहे तच्छब्दस्यैव, एकशेषे भवन्ताविति रूपासिद्धिरिति द्विशब्दपर्यन्तमेव त्यदादिग्राह्यमिति ।

उडुलोमाः ( ई. ५२, ५६ )—उडुलोमस्यापत्यम् 'औडुलोमिः', तस्य बहुवचने तु 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इति वार्तिकेन 'बह्वादिभ्यश्च' इति सूत्रं प्रबाध्य अकारप्रत्यये 'उडुलोमन् अ' इति स्थिते 'नस्तद्धिते' इति टिलोपे ञित्वाऽभावात् कित्त्वाभावाच्च आदिवृद्ध्यभावे अकारान्तात् उडुलोमशब्दाज्जसि पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

उडुलोमान् ( ई. ४६, ५३, ५५ )—उडुलोमस्यापत्यम् 'औडलोमिः, तस्य बहुवचने 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इति वार्तिकेन 'बह्वादिभ्यश्च' इति विहितस्य इञमपवाद्य अकारप्रत्यये 'नस्तद्धिते' इति टिलोपे 'उडुलोम' इति, तस्मात् शसि पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति शस्य नत्वे उक्तं रूपं सिद्धम् ।

वातप्रमीः ( ई. ५४ )—वातं प्रमीयीते इति 'वातप्रमीः' । वातमित्युपपदे 'माङ् माने' इति धातोः 'वातप्रमीः' इत्युणादिसूत्रेण ईप्रत्यये निपातनात् कित्वे च जाते 'आतो लोप इटि च' इत्यालोपे 'उपपदमतिङ्' इति समासे समासात् सुबुत्पत्तौ विभक्तिकार्ये 'वातप्रमीः' इति प्रथमैकवचने रूपं सिद्धम्। अङ्यन्तत्वान्न सुलोपः।

हे बहुश्रेयसि ( ई. ४६ )—बहुश्रेयसीशब्दात् सम्बोधनविवक्षायां सौ 'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायाम् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे सम्बुद्धिलोपे 'हे बहुश्रेयसि' इति । ह्रस्वविधिसामर्थ्यादत्र गुणो नेते भाष्ये स्पष्टम् ।

बहुश्रेयस्यै ( ई. ४२ )—बहुश्रेयसीशब्दात् ङेविभक्तौ 'प्रथमलिङ्गग्रहणञ्च' इत्यनेन नदीसंज्ञायाम् 'आण्नद्याः' इत्यनेन आटि 'बहुश्रेयसी आ ए' इति स्थिते 'आटश्च' इत्यनेन वृद्धौ यणादेशे 'बहुश्रेयस्यै' इति जातम् ।

बहुश्रेयस्याम् ( ई. ३२ )—बहुश्रेयसीशब्दात् सप्तम्येकवचने ङिविभक्तौ 'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'बहुश्रेयसी आम्' इति स्थिते स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्याटि 'आटश्च' इति वृद्धौ यणि उक्तं रूपं सिद्धम् । न च ङेरामि कृते 'ह्रस्वनद्यापो नुट' इति नुटि तस्य 'यदागमाः' इति न्यायेन नामोऽप्यामग्रहणेन ग्रहणात् आट् कुतो नेति वाच्यम्

परत्वादाटा नुटो बाधसम्भवात्। ननु परत्वात् नुटं प्रबाध्य कृतेऽप्याडागमे नुट् कुतो नेति चेन्न, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति न्यायस्य जागरूकत्वात्।

कुमार्यौ (ई. ३३, ४९)—कुमारीमिच्छन्, कुमारीवाचरन् वेति विग्रहे क्यचि क्यजन्तस्य धातुत्वात् सुपो लुकि ततः कर्तरि क्विपि क्विपो लोपे 'अतो लोपः' इत्यलोपे यलोपे 'कुमारी' इति। तस्मात् औविभक्तौ 'कुमारी औ' इति स्थिते 'अचि श्नुधातु' इत्यादिना प्राप्तमियङं बाधित्वा 'एरनेकाचोऽसंयोगपूर्वस्य' इत्यनेन यणि 'कुमार्यौ' इति।

नियाम् (ई. ४४, ४६)—'एरनेकाचोऽसंयोगपूर्वस्य' इति सूत्रे 'अनेकाचः' इत्यस्य प्रत्युदाहरणमेतत्। तत्र हि 'अनेकाचः' इत्यस्याऽभावे नीशब्दात् ङीविभक्तौ नदीत्वाऽभावेऽपि 'ङेराम्नद्याम्नीभ्यः' इति सूत्रे नीशब्दस्य पृथग्ग्रहणाद् आमि 'नी आम्' इति स्थिते 'अचि श्नुधात्वि'ति इयङं बाधित्वा यणि 'न्याम्' इति स्यात्।

दुर्धियः (ई. ३३, ५१)—दुःस्थिता धीर्येषामिति विग्रहे 'प्रादयो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इत्यनेन बहुव्रीहौ पूर्वपदे उत्तरखण्डस्य लोपे च कृते 'दुर्धी' इति। तस्मात् दुर्धीशब्दात् जसि इयङि सकारस्य रुत्वे विसर्गे 'दुर्धियः' इति। न च 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति वार्तिकेन यदा गतिकारकेतरपूर्वपदस्यैव यण् पर्युदस्यते, तदा प्रकृते दुरित्यस्य ध्याधातुयोगे 'गतिश्च' इति सूत्रेण गतित्वात् 'एरनेकाचः' इति यण् कुतो नेति वाच्यम्। 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति वचनेन 'दुःस्थिता धीर्यस्य' इत्यत्र दुःशब्दार्थस्य दुष्टत्वस्य स्थाधात्वर्थेऽन्वयेन ध्याधात्वर्थेऽन्वयाभावेन गतित्वाभावात्।

कथं तर्हि दुर्धियः वृश्चिकभियः (३,६१)—नच 'दुर्धियः' इत्यत्र गतिपूर्वकत्वात् 'वृश्चिकभियः' इत्यादौ कारकपूर्वकत्वाच्च 'एरनेकाच—' इति यण् कुतो नेति वाच्यम्, 'उपसर्गाः क्रियायोगे' इति सूत्रे योगग्रहणेन 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा' इति नियमात् दुःस्थिता धीर्येषामित्यर्थे दुरित्यस्य धीशब्दार्थं प्रति गतित्वाऽभावात्। एवं वृश्चिकाद् भीः वृश्चिकभी इति बुद्धिकृतमपादानत्वं नेह-विवक्षितम्, किन्तु वृश्चिकस्य भीः वृश्चिकभीः अथवा वृश्चिकसम्बन्धिनी भीर्वृश्चिकभी-रिति शाकपार्थिवादीनामित्युत्तरपदलोपिसमास इति गुणोऽप्राप्तिरिति तत्त्वविदः।

सखायमिच्छति (ई. ५१)—सखायमिच्छतीति विग्रहे 'सुप आत्मनः—' इति क्यचि 'अकृत्सार्वधातुकयोः—' इति दीर्घे 'सखीयति' इति। तस्मात् सखीय-

शब्दात् 'सनाद्यन्ताः–' इति धातुसंज्ञकात् क्विपि क्विपः सर्वापहारे 'अतो लोपः' इत्यलोपे 'लोपो व्योर्वलि' इति यलोपे 'सखी' इति ईदन्तं प्रातिपदिकं सिद्धम् । यलोपे कर्तव्ये अल्लोपस्तु न स्थानिवत् 'न पदान्त–' इति यलोपे स्थानिवत्वनिषेधात् । 'अचः परस्मिन्–' इति अल्लोपस्य स्थानिवत्वे 'इको यणचि' इति यणादेशोऽपि न 'क्वौ लुप्तं न स्थानिवत्' इति निषेधात् ।

सखीयतीति सखा ( ई. ३८ )—सखायमिच्छति सखीयति । क्यजन्तात् सखीयशब्दात् क्विपि अल्लोपे 'लोपो व्योर्वलि' इति यलोपे च कृते 'सखी' इति । तस्मात् 'एकदेशविकृत'न्यायेन अनङादिकार्ये 'सखा' इति ।

सख्युः ( ई. ३६, ४७ )—सह खेन प्रवर्तते इति सखः, तमिच्छतीति 'सखीः' । तस्य षष्ठ्येकवचने 'सख्युः' इति । 'ख्यत्यात् परस्य' इति सूत्रे दीर्घस्यापि ग्रहणात् उकार इति विशेषः ।

लून्युः (ई. ४०,६०)—'लूञ् छेदने' इत्यस्माद्धातोः क्तप्रत्यये 'ल्वादिभ्यः' इति नत्वे 'क्यचि च' इति ईत्वे 'लूनी' इति । तस्मात् ङसि 'एरनेकाचः' इति यणि नत्वस्यासिद्धत्वात् 'ख्यत्यात्परस्य' इति उत्वे सकारस्य रुत्वे विसर्गे च 'लून्युः' इति सिद्धम् ।

क्षाम्युः ( ई. ४१ )—क्षैधातोः क्तप्रत्यये 'आदेच' इत्यात्त्वे 'क्षायो मः' इति मत्वे क्यचि ईत्वे च कृते 'क्षामी' इति । तस्मात् ङसि 'क्षामी अस्' इति स्थिते 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि ततः मत्वस्यासिद्धत्वात् 'ख्यत्यात्परस्य' इति उत्वे रुत्वे विसर्गे च कृते 'क्षाम्युः' इति सिद्धम् ।

अप्तृन्तृजिति ( ई. ४९ )—अप्तृन्निति सूत्रे 'तुरिष्ठेमेयस्सु' इतिवत् 'तृ' इत्येव सिद्धे तृन्तृचोर्भेदेन उपादानं 'क्वचित् सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम् । अत एव 'न कोपधायाः' इत्यत्र सामान्योक्तावपि वुतद्धितयोरेव को गृह्यते । यद्वा 'अप्तृ' इत्येव वक्तव्ये तृन्तृजिति भेदेनोपादानम् 'अर्वणस्तृ' व्यावृत्तये इत्यवसेयम् ।

नप्त्रादिग्रहणस्येति ( ई. ४९, ५५ )—'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्' इति सूत्रे 'उणादयो व्युत्पन्नानि प्रातिपदिकानि' इति पक्षे नप्त्रादीनां शब्दानां तृन्नतत्वात्तृजन्तत्वाच्च तृन्तृच्ग्रहणेनैव दीर्घसिद्ध्या नप्त्रादि

ग्रहणं 'सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवतीति' सिद्धान्तात् नियमार्थम् । नियमेन च स्वेतरस्वजातीयव्यावृत्तिः क्रियते इति नप्त्रादीतरोणादिनिष्पन्नतृन्नन्ततृजन्तशब्दानां न दीर्घः इति फलितम् । तथा च पितृशब्दस्य भ्रात्रादिशब्दस्य वा तृन्तृजन्तत्वेऽपि न दीर्घः । नचैवमुद्गातृशब्दस्याप्युणादिनिष्पन्नतया तत्रापि दीर्घो न स्यादिति वाच्यम्, समर्थसूत्रे 'उद्गातारः' इति भाष्यप्रयोगदर्शनेन भाष्यप्रामाण्यात्तस्य नियमेन व्यावृत्त्यभावकल्पनात् ।

नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्—अयम्भावः 'अप्तृन्नि'ति सूत्रे 'उणादयो व्युत्पन्नानि प्रातिपदिकानी'ति पक्षे नप्त्रादीनां सतां तृन्नन्तत्वात्तृजन्तत्वाच्च तृन्-तृच्ग्रहणेनैव दीर्घे सिद्धे नप्त्रादिग्रहणं, 'सिद्धे सत्यारभ्यमाणो विधिर्नियमार्यो भवती'ति सिद्धान्तात्, नियमयति—'तृन्तृजन्तानां चेत्तर्हि नप्त्रादीनामेवे'ति । नियमेन च स्वेतरस्वजातीयव्यावृत्तिः क्रियते, इति नप्त्रादीतरोणादिनिष्पन्नतृन्नन्ततृजन्तशब्दानां न दीर्घः इति ।

क्रोष्टा ( ई. ३६ )—क्रोष्टुशब्दात् सौ अनुबन्धलोपे 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावे कृते 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते तम्प्रबाध्य 'ऋदुशनस्पुरुदंशोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'अप्तृनतृच्—' इति उपधादीर्घे 'हलङ्याब्भ्यः' इति सुलोपे 'न लोपः प्रातिपदिकान्तस्य' इति न लोपे 'क्रोष्टा' इति ।

क्रोष्टुः ( ई. ५२, ५३ )—क्रोष्टुशब्दात् ङसि अनुबन्धलोपे 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे 'ऋत उत' इति उत्वे रपरत्वे 'रात्सस्य' इति सलोपे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'क्रोष्टुः' इति । तृज्वद्भावाभावे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपे सस्य रुत्वे विसर्गे च 'क्रोष्टोः' इति भवति ।

क्रोष्टूनाम् ( ई. ४७,४९,५२,५६ )—क्रोष्टुशब्दात् आमि 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति वार्तिकेन तृजत्वं बाधित्वा नुटि 'नामि' इति दीर्घे उक्तं रूपं सिद्धम् ।

नुमचिरेति ( ई. ४७ )—'इकोऽचि विभक्तौ' इति नुमः पूर्वम्, 'अचि र ऋतः' इति रेफात् पूर्वं, 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावाच्च पूर्वविप्रतिषेधेन नुमेनेति वार्तिकार्थः । वारीणाम्, क्रोष्टूनाम्, इति क्रमेणोदाहरणानि ।

स्वभुवौ ( ई.५४ )—स्वस्मात् भवतीति विग्रहे स्वभूशब्दात् क्विपि सर्वापहारे 'स्वभू' इति, तस्मात् औ 'स्वभू औ' इति स्थिते कारकपूर्वकत्वात् 'ओः सुपि' इति यणि प्राप्ते 'न भूसुधियोः' इति निषेधे उवङि उक्तं रूपं सिद्धम् ।

नः—नृशब्दात् सम्बुद्धिविवक्षायां सौ 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे, रपरे, हल्ङ्यादिना सुलोपे विसर्गे 'नः' इति सिद्धम् ।

कीः ( ई. ४६ )—'कॄ विक्षेपे' इति धातुः । तस्यानुकरणे 'अनुकणं प्रकृतिवद्भवति' इति पक्षे 'कॄ' इत्यस्यार्थवत्वेन प्रातिपदिकात् सौ ॠकारस्य ईत्वे रपरे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे सोर्हल्ङ्यादिलोपे रेफस्य विसर्गे उक्तं रूपं सिद्धम् ।

गमुल् ( ई. ५३ )—गम्लृ शब्दात् ङसि 'ऋत उत्' इत्युत्वे लपरत्वे 'संयोगान्तस्य' इति सलोपे 'गमुल्' इति ।

शकुल् ( ई. ५६ )—'शक्लृ अस्' इति स्थिते 'ऋत्' इति उत्वे लपरत्वे संयोगान्तलोपे उक्तं रूपं सिद्धम् ।

गाम् ( ई. ३४ )—गोशब्दात् अमि 'गो अम्' इति स्थिते 'औतोऽम्शसोः' इत्यनेन ओकाराकायोराकारादेशे उक्तं रूपं सिद्धम् । न चेह आरादेशो न स्यात् परत्वात् णिद्वद्भावप्रवृत्तौ वृद्धिप्रसङ्गादिति वाच्यम् ? निरवकाशतया आत्वविधेः णिद्धद्भावबाधकत्वात् । नहि वृद्धिविषयादन्यत्र आत्वविधेः प्रसक्तिरस्तीति भावः

हे भानो । अयम्भावः—यदि सम्बुद्धिविषये ओकारस्यौत्वं स्यात्तर्हि सम्बुद्धिविषये सर्वत्र ओकाराभावेन 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इति सूत्रमेव व्यर्थं स्यात् । तदेव व्यर्थं सत् सम्बुद्धौ ओकारस्यौत्वन्न भवतीति ज्ञापयति, एवञ्च सविभक्तौ गुणे कृते, औत्वं स्यादित्यभिप्रेत्याह—हे भानव इति ।

प्रध्यम्—'प्रधी अम्' इति स्थिते 'अमि पूर्वः' इति प्रबाध्य 'अचिश्नुधातु' इति इयङि प्राप्ते तमपि प्रबाध्य 'एरनेकाचः—इति यणि प्रध्यम् एति ।

ग्रामण्याम्—ग्रामं नयति = नियच्छति, इति ग्रामणीः । ग्रामणीशब्दात् 'ङेराम्नद्याम्नीभ्यः' इति नीशब्दात् परस्य ङेरामि 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि 'ग्रामण्याम्' इति ।

**शुद्धधियौ** ( ई. ४६ )—शुद्धा धीर्यस्येति विग्रहे निष्पन्नात् शुद्धधीशब्दात् औविभक्तौ 'शुद्धधी औ' इति स्थिते 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति वार्तिकेन शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य धीशब्दस्येकारस्य 'एरनेकाचः—' इति प्राप्तयणो निषेधे 'अचिश्नुधातु—' इति इयङि 'शुद्धधियौ' इति । ( शुद्धं ब्रह्म ध्यायतीति विग्रहे तु कारकपूर्वकत्वात् स्यादेव यण्—'शुद्धध्यौ' इत्यादि )

**धातॄणाम्** ( ई. ३५ )—धातृशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुटि 'नामि' इति दीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'धातॄणाम्' इति ।

**पितरौ** (ई. ३६,६१)—पितृशब्दादौ विभक्तौ 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरत्वे च कृते 'पितरौ' इति । अत्र व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वात् 'अप्तृन्निति दीर्घो न । अव्युत्पत्तिपक्षे तु—तृन्तृजादिष्वनन्तर्भावात् दीर्घशङ्कैव नोदेतीति ।

**नॄणाम्** ( ई. ३४ )—नृशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नृ नाम्' इति स्थिते 'नामि' इति सूत्रं प्रबाध्य 'नृ च' इति विभाषया दीर्घे 'ऋवर्णान्नस्ये'ति णत्वे 'नॄणाम् इति । अत्र 'नामी'ति दीर्घस्तु न 'सकृद्गतौ यद्बाधितं तद्बाधितमेवे'ति न्यायस्य जागरूकत्वात् ।

**गौः** ( ई. ३५ )—गोशब्दात् सौ 'गोतो णित्' इति ओकारात्परस्य सर्वनामस्थानस्य 'सु' इत्यस्य णिद्भावे 'अचोऽञ्णिति' इति वृद्धौ सस्य रुत्वे विसर्गे 'गौः' इति सिद्धम् ।

**गाः** ( ई. ३४ )—गोशब्दात् शसि अनुबन्धलोपे 'औतोऽम्शसोः' इति गोशब्दस्य ओकारस्य विभक्तेरकारस्य च आकारैकादेशे सस्य रुत्वे विसर्गे 'गाः' इति सिद्धम् ।

**राः** ( ई. ३६ )—रैशब्दात् सौ विभक्तौ 'रायो हलि' इति रैशब्दस्य ऐकारस्य आकारादेशे सस्य रुत्वे विसर्गे 'राः' इति निष्पन्नम् ।

इति अजन्तपुँल्लिङ्गप्रकरणम् ।

# अथ अजन्तस्त्रीलिङ्गप्रकरणम्

रमायाम (ई. ५७)—रमाशब्दात् ङीविभक्तौ 'रमा इ' इति स्थिते 'ङेराम्न-द्याम्नीभ्यः' इत्यामादेशे 'याडापः' इत्याडागमे सवर्णदीर्घे उक्तं रूपं सिद्धम्।

सर्वासाम ( ई. ५५ )—सर्वाशब्दात् आमि 'सर्वा आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति सुटि 'सर्वासाम्' इति। नचात्र आमः अवर्णान्तसर्वनामाविहि-तत्वाभावे कथं सुडिति वाच्यम्, सवर्णदीर्घैकादेशस्य पूर्वान्तत्वेन ग्रहणात्। किंच परादिवद्भावेन आदन्तत्वमादाय तस्य लिङ्गविशिष्टपरिभाषया सर्वनामत्वमिति न दोषः।

असंयुक्ता ये डलका इति—अयम्भावः—भाष्यकृता 'अम्बार्थं द्व्यक्षरं यदि' इति वचनेन द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भविष्यतीति हे अम्बाडे इत्यादिप्रयोगेषु ह्रस्वो न स्यादिति 'डलकवतां प्रतिषेधो वक्तव्यः' इति वार्तिकं प्रत्याख्यातम्। तथा च—वार्तिकाभावे 'हे अक्क' इत्यादिप्रयोगे ह्रस्वो भवति। वार्तिकसत्तायान्तु ह्रस्वो न भवतीत फलभेदनिरासाय वार्तिकसत्वेऽपि 'असंयुक्ता ये डलकास्तद्वतां प्रतिषेधो वक्तव्यः' इत्यर्थोऽवश्यं कार्यः।

हे अम्बिके ( ई. ४३ )—अम्बिकाशब्दस्य सम्बोधने 'हे अम्बिके' इति। अत्र 'सम्बुद्धौ च' इत्यनेन अकारस्य एकारे कृते 'एङ्ह्रस्वादि'ति सुलोपो भवति। 'अम्बार्थनद्योर्ह्रस्वः' इत्यनेन ह्रस्वत्वन्तु न भवति, 'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' इति वार्तिकेन निषेधात्।

वस्तुतस्तु—'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' इति नापूर्वं वार्तिकं, किन्तु फलितमेव। तथा हि—'डलकवतां प्रतिषेधो वक्तव्यः' इदं वार्तिकम् 'अम्बार्थं द्व्यक्षरं यदि' इत्यनेन भगवता भाष्यकारेण प्रत्याख्यातम्। तथा च प्रत्याख्यानपक्षे 'हे अक्क' इत्यादौ ह्रस्वो भवति। वार्तिकसत्तायां तु ह्रस्वो न भवतीति फलभेदवारणाय वार्तिकसत्त्वेऽपि 'असंयुक्ता ये डलकास्तद्वतां प्रतिषेधो वक्तव्यः' इत्यर्थोऽवश्यं कार्यः इति वस्तुगत्या फलितं सिद्धमिति।

जरसौ (ई. ६०)—जराशब्दात् औविभक्तौ शीभावात् परत्वाज्जरसादेशे 'जरसौ' इति। अत्र जरसादेशस्य स्थानित्वेन आबन्तत्वमादाय श्यादेशस्तु न, आ आबिति प्रश्लेष्य आकाररूपस्यैवापः सर्वत्र ग्रहणेन अल्विध्यात् स्थानिवत्वाऽप्राप्तेः।

जरसाम् ( ई. ४४,५७ )—जराशब्दादामि 'जरा आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' इति प्राप्तं नुटं बाधित्वा 'जराया जरसन्यतरस्याम्' इत्यनेन परत्वाज्जरसादेशे उक्तं रूपं सिद्धम्। न च परत्वाज्जरसादेशेऽपि तस्य स्थानिवत्त्वेन आबन्ततया 'ह्रस्वनद्यापो नुट्' इति नुट् स्यादिति वाच्यम्, 'अनल्विधौ' इत्यनेन स्थानिवद्भावनिषेधात्। नन्वाप्त्वस्याल्मात्रवृत्तित्वाऽभावात् कथं स्थानिवद्भावनिषेध इति चेन्न, 'ह्रस्वनद्यापः' इत्यत्र आप्पदे आकारात्पूर्वं सवर्णदीर्घेणाकारं प्रश्लिष्य—आकाररूपो य आप् तदन्तादङ्गादित्यर्थस्वीकारेण आप्त्वे 'अनल्विधौ' इत्यस्याऽप्रवृत्तावपि आप्त्वस्य आमात्रवृत्तिधर्मत्वेन 'अनल्विधा'विति निषेधात्।

यद्यपि जरसादेशस्येति। अयम्भावः—जरसावित्यादौ जरसादेशस्य स्थानिवद्भावेनाबन्तत्वमाश्रित्य 'औङ आपः' 'आङि चापः' 'याडापः' 'ह्रस्वनद्यापः' 'ङेराम्' इति पञ्चापि कार्याणि प्राप्नुवन्ति, परञ्च 'अनल्विधौ' इति निषेधेन स्थानिवद्भावाभावेनाबन्तत्वाभावान्न भवन्ति। नचाबन्तत्वधर्मस्याल्मात्रवृत्तित्वाभावेन 'अनल् विधौ' इति निषेधो न स्यादिति वाच्यम्। 'औङ आपः' इत्यादिसूत्रे आकारस्य प्रश्लेषेण आकाररूपो य आप् तदन्तात्परस्य औङः शी स्यादित्याद्यर्थात्। तथाच--आकाररूपत्वधर्मः स्थानिवद्भावेन नह्यायास्यतीति पञ्चापि कार्याणि न भवन्ति इत्थञ्च 'हल्ङ्याब्भ्यः' इति सूत्रे ङी ई आ आप् इति प्रश्लेषेण निष्कौशाम्बिरतिखट्व इत्यादि आकाररूपत्वधर्मस्यानयनं न स्यादिति सुलोपस्य प्रसङ्ग एव नास्तीति तदर्थं सूत्रे दीर्घग्रहणं कर्त्तव्यमिति।

नन्वाकाररूपो य आप् तदन्तमित्याद्यर्थेऽपि अतिखट्वायेत्यत्र श्रूयमाणाऽकारः स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याट स्यादिति वाच्यम्। आबन्ततदाद्यभिन्नं यदङ्गं ततः परस्य याट् स्यादित्यर्थात्। एवञ्चात्र यत् खट्वा इति आबन्ततदादि न च तदङ्गमस्ति, यच्चाङ्गं वर्तते अतिखट्वेति न च तत् आबन्ततदादीति याडप्रवृत्तिः।

अतिखट्वाय ( ई. ४८ )—ननु याडाप इति सूत्रे आकारप्रश्लेपेऽपि अत्र दीर्घोत्तरमाकाररूपत्वस्य विद्यमानत्वेन स्थानिवत्त्वेनाप्त्वमाश्रित्य याट् कुतो नेति चेन्न, स्त्रीप्रत्यये चानुपसर्जनेनेति बलात् आबन्तं यत्तदादि तद्रूपादङ्गात् परस्य याडित्यर्थेनादोषात्।

नसा ( ई. ४६ )—नासिकाशब्दात् टाविभक्तौ 'पद्दन्' इति सूत्रेण नासिकाशब्दस्य नसादेशे उक्तं रूपं सिद्धम्।

निटत्सु (ई. ३३, ५२)—निशाशब्दस्य सप्तमीबहुवचने 'पद्दन्–' इति सूत्रेण 'नश्' आदेशे 'निश् सु' इति स्थिते 'व्रश्चे'ति सूत्रेण शस्य षत्वे तस्य जश्त्वेन डकारे 'डः सि धुट्' इति धुटि डस्य धस्य च यथासंख्येन चर्त्वे उक्तं रूपं सिद्धम्। धुडभावपक्षे 'निट्सु' इति। ननु 'निट् त् सु' इति स्थिते तकारस्य ष्टुत्वं कुतो नेति चेन्न, 'स्वादिष्वि'ति पदत्वेन 'न पदान्ताट्टोरनाम्' इति निषेधात्। नच 'चयोः द्वितीया' इत्यनेन धुट्पक्षे तस्य थः, कुतो नेति वाच्यम्, 'नादिन्याक्रोशे' इति सूत्रभाष्ये 'चयो द्वितीया' इत्यस्य पाठदर्शनेन तत्कर्तव्ये चर्त्वस्य परत्वेन असिद्धत्वात्। नच जश्त्वात् प्राक् 'षढोः कः सि' इति षकारस्य ककारः शङ्क्यः, जश्त्वं प्रत्यसिद्धत्वात्।

निज्भ्याम् (ई. ४८)—केचित्तु 'एकाचो वशः' इत्युत्तरसूत्रे धातोरित्यस्यानुवृत्त्या मध्ये व्रश्चादिसूत्रेपि 'दादेर्धातोर्घः' इति सूत्राद्धातोरित्यनुवर्तयन्ति तन्मते निशाशब्दस्य भ्यामि 'पद्दन्' इति सूत्रेण निशादेशे 'नश्भ्याम्' इति स्थिते निशित्यस्य धातुत्वाऽभावात् षत्वाऽभावे 'झलाञ्जशोऽन्ते' इति जश्त्वेन शकारस्य स्थानसाम्याज्जकारे उक्तं रूपं सिद्धम्। कुत्वं तु न, जश्त्वस्याऽसिद्धत्वात्।

निच्शु (४३, ५१)—मतान्तरे इदम्। सिद्धान्तिनस्तु—'निट्त्सु'–'निट्सु' इति वदन्ति। वस्तुतस्तु–तन्मन्दम्। 'एकाचो वशो भषझषन्तस्य स्ध्वोः' इत्युत्तरसूत्रे 'धातोः' इत्यस्यानुवृत्त्या तन्मध्यपतित 'व्रश्चा'दि सूत्रेऽपि तदनुवृत्तेरौचित्यात्। एवञ्च 'निश् सु' इति स्थिते शान्तस्य धातुत्वाभावेन 'व्रश्चभ्रस्ज–सृज–मृज–यज–राज–भ्राज–च्छशां षः' इत्यस्याऽप्रवृत्त्या 'झलां जशोन्ते' इति जश्त्वेन शकारस्य स्थानसाम्यात् तकारे कृते 'स्तोः श्चुना श्चुः' इति श्चुत्वेन शकारे कृते 'खरि च' इत्यनेन चर्त्वे 'निच्शु' इति। 'शश्छोटि' इति छत्वपक्षे 'निच्छु' इत्यपि ज्ञेयम्।

पृतः (ई. ४१)—पृतनाशब्दात् शसि 'पृतना अस' इति स्थिते 'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा' इति पद्दन्सूत्रस्थवार्तिकेन पृदादेशे रुत्वे विसर्गे च 'पृतः' इति। पृदादेशाभावपक्षे 'पृतना' इति रमावत्। (पृतना=सेना)

मत्यै (ई. ३३, ४६)—मतिशब्दात् ङेविभक्तौ 'ङिति ह्रस्वश्च' इति नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ यणादेशे 'मत्यै' इति। नदीत्वाऽभावपक्षे 'शेषो घ्यसखि' इति घित्वात् 'घेर्ङिति' इति गुणेऽयादेशे 'मतये' इति।

**प्रियतिसृ** ( ई. ३४ )—प्रियास्तिस्रो यस्य तत्कुलं 'प्रियतिसृ' इति । प्रियत्रिशब्दात् सौ तस्य लुकि 'न लुमते'त्यस्य अनित्यत्वपक्षे प्रत्ययलक्षणेन विभक्तिपरकत्वात् 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इत्यनेन तिस्रादेशे उक्तं रूपं सिद्धम् ।

'न लुमते'त्यस्यानित्यत्वे 'इकोऽचि विभक्तौ' इति सूत्रस्य 'अज्ग्रहणं लिङ्गम् । तत्र हि हलादिषु भ्यामादिषु सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्य' इत्यनेनैव लोपसम्भवात् अचीति व्यर्थं स्यात् । नच सम्बुद्धिव्यावृत्त्यर्थमज्ग्रहणं, तत्राहि नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधेन नकारश्रवणादिति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरभावात् । अत एव 'हे त्रपो, हे त्रपु' इति भाष्योदाहरणं सङ्गच्छते ।

**स्त्रियामिति त्रिचतुरोः** ( ई. ५१ )—अयं भावः श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानिति न्यायेन स्त्रियामित्यस्य त्रिचतुरोरेव विशेषणत्वन्नत्वङ्गस्य, तेन प्रियास्त्रयस्त्रीणि वा यस्या इत्यर्थे प्रियत्रिशब्दस्य मतिवद्रूपम् । आमि तु प्रियत्रयाणामिति विशेषः । प्रियास्तिस्रो यस्येत्यर्थे तिस्रादेशे प्रियतिसा प्रियतिस्रावित्यादि । प्रियास्तिस्रो यस्य तत्कुलमित्यर्थे स्वमोर्लुक्यपि न लुमतेति निषेधस्यानित्यत्वात्पक्षे तिस्रादेशे प्रियत्रि प्रियतिसृ इति । अन्यत्र रादेशात्पूर्वविप्रतिषेधेन नुमि प्रियतिसृणी इत्यादि, टादौ तृतीयादिष्विति पुंवद्भावे प्रियतिस्रा प्रियतिसृणेत्यादीति ।

**प्रियत्रि** ( ई. ३६, ४५ )—प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे त्रिशब्दस्य स्त्रियां वर्तमानत्वेऽपि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशो न भवति, प्रियत्रिशब्दात् परस्य प्रथमैकवचनविभक्तेः सकारस्य 'स्वमोर्नपुंसकात्' इति लुप्तत्वात्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाच्च । 'इकोऽचि विभक्तौ' इति सूत्रस्य—अचिग्रहणेन 'न लुमताङ्गस्य' इत्यस्यानित्यत्वपक्षे तु प्रत्ययलक्षणेन विभक्तिपरकत्वात् तिस्रादेशे 'प्रियतिसृ' इति केचित् ।

**प्रियतिसा** ( ई. २९ )—'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेन स्त्रियामित्यस्य त्रिचतुरोरेव विशेषणं न त्वङ्गस्य, तेन 'प्रियास्तिस्रो यस्य इति विग्रहे समासे 'स्त्रियाः पुंवत्' इति प्रियशब्दस्य पुंवद्भावे 'प्रियत्रि' इति । तस्मात् सौ, प्रियत्रिशब्दस्य पुंल्लिंगत्वेपि त्रिशब्दस्य स्त्रीलिङ्गत्वात् तिस्रादेशे 'ऋदुशनस' इत्यनङि, दीर्घे, सुलोपे 'प्रियतिसा' इति सिद्धम् ।

प्रियतिस्रा ( ई. ३६ )—प्रियास्तिस्रो यस्य तत्कुलं 'प्रियत्रि' इति । अस्मात् प्रियत्रिशब्दात् टाविभक्तौ अनुबन्धलोपे 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इत्यनेन पुंवद्भावपक्षे नुमभावात् 'अचि र ऋतः' इत्यनेन रत्वे तिस्रादेशे उक्तं रूपं सिद्धम् । पुंवत्त्वाभावपक्षे तु तिस्रादेशे 'इकोऽचि विभक्तौ' इति नुमि णत्वे 'प्रियतिसृणा' इति ।

प्रियतिसृणाम—प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे 'न लुमते'—त्यस्यानित्यत्वपक्षे षष्ठीबहुवचने त्रयादेशं बाधित्वा परत्वात् तिस्रादेशे सति रत्वं बाधित्वा 'नुमचिरेति' नुटि णत्वे उक्तं रूपं सिद्धम् ।

( प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे 'प्रियत्रि' 'प्रियतिसृ' इति रूपद्वयं भवति । तथाहि—उक्तविग्रहे त्रिशब्दस्य स्त्रियां वर्तमानत्वेऽपि प्रियत्रिशब्दात् परस्य सोः 'स्वमोर्नपुंसकात्' इति लुकि तस्य 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् विभक्तिपरत्वाऽभावेन 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशाऽभावात् 'प्रियत्रि' इति । 'इकोऽचि विभक्तौ' इत्यत्राचिग्रहणेन 'न लुमताङ्गस्य' इत्यस्यानित्यत्वपक्षे तु प्रत्ययलक्षणेन विभक्तिपरत्वात् तिस्रादेशे 'प्रियतिसृ' इति । )

सखी ( ई. ४७ )—'सख्यशिश्वीति भाषायाम्' इति सखिशब्दात् ङीषि सखीशब्दः, तस्य सौ 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया 'अनङ् सौ' इत्यनङि णिद्वद्भावे च प्राप्ते 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति निषेधे हल्ङ्यादिना सोर्लोपे 'सखी' इति ।

स्त्रीम् ( ई. ४४, ५७ )—स्त्रीशब्दादमि 'वाऽम्शसोः' इत्यङि 'स्त्रियम्' इति । पक्षे 'अमि पूर्वः' इति पूर्वरूपे 'स्त्रीम्' इति ।

अतिस्त्रये ( ई. ३६, ५०, ५७ )—स्त्रियमतिक्रान्तः इति विग्रहे अतिस्त्रिशब्दात् ङेविभक्तौ 'गुणनाभावोत्वनुड्भिः परत्वात् पुंसि बाध्यते' इति हरिकारिकोक्तत्वात् इयङं बाधित्वा 'घेर्ङिति' इति घित्वाद् गुणे अयादेशे उक्तं रूपं सिद्धम् । स्त्रियमतिक्रान्तेति विग्रहे तु 'ङिति ह्रस्वश्च' इति नदीत्वादाटि वृद्धौ इयङि 'अतिस्त्रियै' इति नदीत्वाभावे 'अतिस्त्रये' इति ।

अतिस्त्रियै ( ई. ४२, ४३, ५१, ५५ )—स्त्रियमतिक्रान्तायै इत्यर्थे ङे विभक्तौ 'ङिति ह्रस्वश्चे'ति ह्रस्वान्तत्वान्नदीसंज्ञाविकल्पः । अस्त्रीति निषेधस्तु नाशंक्यः

तस्येयङुवङ्स्थानावित्यनेन सम्बद्धयता दीर्घस्यैव निषेधकरणं न तु ह्रस्वस्य। तत आटि वृद्धौ इयङादेशे च सिद्धम्। पदे गुणे अतिस्त्रये इति।

प्रधीशब्दस्येति—आध्यै प्रध्यै ब्राह्मण्यै इति भाष्यप्रयोगेण पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारमते प्रकृष्टं ध्यायतीत्यर्थे प्रधीशब्दस्य नित्यस्त्रीलिङ्गतया लक्ष्मीवद् रूपम्। उक्तभाष्यप्रयोगे बहुव्रीहिमाश्रित्य लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमते उक्तेऽर्थे प्रधीशब्दस्य पुंवद् रूपम्। प्रकृष्टा धीरित्यर्थे उभयमते लक्ष्मीवद्रूपम्। एवं सुष्ठु ध्यायतीत्यर्थे सुधीशब्दस्य वृत्तिकारमते लक्ष्मीवत्, कैयटमते पुंवत्। ग्रामणी-कटप्रू-खलपू-इत्यादीनामुभयमतेऽपि पुंवदेव, ग्रामनयनादेः स्वभावतः पुंसो धर्मत्वात्।

पदान्तरं विनापि—अयम्भावः—वृत्तिकारमते ये शब्दाः स्त्रीति पदं विनापि स्त्रीलिङ्गं वक्तुं समर्थास्तेषां शब्दानां स्त्रीलिङ्गवद्रूपं स्यात्। यथा—प्रकृष्टं ध्यायतीति विग्रहे प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपं स्यात्। यतः श्रीभगवतो ध्याने स्त्रीपुरुषयोर्द्वयोरप्याज्ञया प्रधीः स्त्रीति विशेष्यविशेषणभावं विनापि प्रधीशब्दः स्त्रीलिङ्गं वक्तुं समर्थ इति नित्यस्त्रीत्वं तस्य। कैयटमते तु ये शब्दा नपुंसकलिङ्गं पुंल्लिङ्गञ्च न वदेयुस्तेषामेव शब्दानां नित्यस्त्रीत्वं भवति, एवञ्च प्रधी पुरुषः, प्रधि कुलमित्याद्यर्थेन प्रधीशब्दस्य नित्यस्त्रीत्वाभावेन लक्ष्मीशब्दवद्रूपन्न स्यादिति भावः।

कथं तर्हि हा पितः क्वासि हे सुभ्रु (ई. ५५)—ऊङ्प्रत्ययान्तोऽयं सुभ्रूशब्दः। तेन 'हे सुभ्रूः' इत्यत्र अस्त्रीप्रत्ययान्तत्वात् 'गोस्त्रियोः—' इति ह्रस्वो न भवति। 'नेयङुवङ्स्थानावस्त्री इति निषेधेन नदीत्वाभावात् 'अम्बार्थेति ह्रस्वत्वं च न भवति। ननु तर्हि 'हा पितः क्वाऽसि हे सुभ्रु' इति भट्टिप्रयोगः कथमिति चेदुच्यते 'प्रमाद एवाऽयमिति बहवः'। केचित्तु सामन्ये नपुंसकत्वमाश्रित्य कथंचित् समादधुः।

पूनर्भूणाम् (ई. ४०, ४४, ६१)—पुनर्भूशब्दात् आमि 'दन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः' इति प्राप्तं यणं प्रबाध्य परत्वात् नद्यन्तत्वान्नुटि दीर्घे 'एकाजुत्तरपदे णः' इति णत्वे उक्तं रूपं सिद्धम्।

सर्वस्याः (ई. ३४)—सर्वाशब्दात् ङसि अनुबन्धलोपे 'सर्वा अस्' इति स्थिते 'याडापः' इति याटं प्रबाध्य 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आव-

न्तस्य ह्रस्वत्वे च कृते अनुबन्धलोपे 'सर्वस्या अस्' इति स्थिते सवर्णदीर्घे सत्व रुत्वे विसर्गे 'सर्वस्याः' इति।

उत्तरपूर्वस्यै ( ई. ३५ )—उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालमिति विग्रहे 'दिङ्नामान्यन्तराले' इति समासनिष्पन्नात् उत्तरपूर्वाशब्दात् ङेविभक्तौ विभाषा दिक्समासे बहुव्रीहौ' इति विभाषया सर्वनामसंज्ञायां 'सर्वनाम्नः स्याड—' इति स्याडागमे ह्रस्वे च कृते 'वृद्धिरेचि' इति वृद्धौ 'उत्तरपूर्वस्यै' इति। पक्षे सर्वनाम-संज्ञाऽभावे 'याडापः' इति याटि वृद्धौ 'उत्तरपूर्वायै' इति।

उत्तरपूर्वायै ( ई. ३४ )—'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रेण लक्षण-प्रतिपदोक्तपरिभाषया 'दिङ्नामान्यन्तराले' इति दिक्छब्दमुच्चार्य निष्पन्नप्रतिपदो-क्तदिक्समास एव सर्वनामसंज्ञाविधानात् 'योत्तरा सा पूर्वा यस्याः उन्मुग्धायाः' इति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासनिष्पन्न 'उत्तरपूर्वाशब्दात् ङे विभक्तौ' 'याडापः' इति याटि 'वृद्धिरेचि' इति वृद्धौ 'उत्तरपूर्वायै' इति।

हे अम्ब ( ई. ३० )—अम्बाशब्दात् सम्बोधनविवक्षायां सौ 'अम्बार्थनद्यो-र्ह्रस्वः' इति ह्रस्वत्वे सुलोपे 'हे अम्ब' इति।

ङिति ह्रस्वश्च—अत्र सूत्रे 'ङिति' इत्येकं वाक्यम्। इयङुवङ्स्थानौ स्त्रीश-ब्दाभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ङिति नदीसंज्ञौ वा स्तः इति तस्यार्थः। 'ह्रस्वश्च' इत्यपरं वाक्यम्। 'ह्रस्वौ इवर्णोवर्णौ ङिति स्त्रियां नदीसंज्ञौ वा स्तः' इति तस्यार्थः। अत्र 'नेयङुवङ्स्थानावस्त्री' इत्यतो अनुवृत्तम् अस्त्रीति तु इयङुवङ्स्थानावित्यादि प्रथमवाक्यविहितनदीत्वस्यैव पर्युदासः, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदी-त्वस्याऽपि, तत्सम्बद्धस्यैवानुवृत्तेः।

मत्यै (ई. ३२,६१)—मतिशब्दात् ङेविभक्तौ अनुबन्धलोपे 'मति ए' इति जाते 'ङिति ह्रस्वश्च' इति नदीसंज्ञायाम् 'आण्नद्याः' इत्याटि 'आटश्च' इति वृद्धौ 'इको यणचि' इति यणि 'मत्यै' इति। नदीत्वाभावे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे 'एचोऽयवायावः' इत्ययादेशे 'मतये' इति सिद्धम्।

मत्याम् ( ई. ३९, ४९, ५६ )—मतिशब्दात् ङिविभक्तौ 'ङिति ह्रस्वश्च' इति नदीसंज्ञायाम् 'इदुद्भ्याम्' इति ङेरामि कृते स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्याटि 'आटश्च' इति वृद्धौ 'इको यणचि' इति यणि 'मत्याम्' इति। 'नदीसंज्ञाभ

'शेषो घ्यसखि' इति घिसंज्ञायाम् 'अच्च घेः' इति ङेरौत्वे घेरकारादेशे च कृते 'वृद्धि रेऽचि' इति वृद्धौ 'मतौ' इति ।

तिस्रः ( ई. ३५ )—त्रिशब्दाज्जसि शसि च विभक्तौ 'त्रिचतुरोः स्त्रियां तिसृ-चतसृ' इति तिसृादेशे 'ऋतो ङि—' इति गुणं प्रबाध्य पूर्वसवर्णदीर्घे प्राप्ते तमपि प्रबाध्य 'अचिर ऋतः' इति रेफादेशे सस्य रुत्वे विसर्गे 'तिस्रः' इति ।

तिसृणाम् ( ई. ३६ )—त्रिशब्दादामि विभक्तौ 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति त्रिशब्दस्य तिसृादेशे 'तिसृ आम्' इति स्थिते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इत्युक्त्या 'अचि र ऋतः' इति प्राप्तं रेफादेशं बाधित्वा'ह्रस्वनद्या-पो नुट्' इति नुटि अनुबन्धलोप 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'तिसृणाम्' इति ।

त्रिशब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई. ३७ )—

( त्रिशब्दो नित्यं बहुवचनान्तः )

| पुंसि | स्त्रियाम् | नपुंसके |
|---|---|---|
| त्रयः | तिस्रः | त्रीणि |
| त्रीन् | तिस्रः | त्रीणि |
| त्रिभिः | तिसृभिः | त्रिभिः |
| त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| त्रयाणाम् | तिसृणाम् | त्रयाणाम् |
| त्रिषु | तिसृषु | त्रिषु |
| हे त्रयः | हे तिस्रः | हे त्रीणि |

स्त्रीः ( ई. ३५ )—स्त्रीशब्दात् शसि 'स्त्री–अस' इति स्थिते 'वाऽम्शसोः' इति इयङि सस्य रुत्वे विसर्गे 'स्त्रियः' इति । पक्षे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे 'स्त्रीः' इत्युक्तं रूपं सिद्धम् ।

स्त्रियै ( ई. ५४ )—स्त्रीशब्दात् ङेविभक्तौ 'यूस्त्र्याख्यौ नदी' इति नदीसंज्ञा-याम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'स्त्रियाः' इति इयङि अनुबन्धलोपे 'स्त्रियै' इति ।

हे श्रीः ( ई. ३४ )—श्रीशब्दात् सम्बुद्धिविवक्षायां सौ सकारस्य रुत्वे विसर्गे रूपं सिद्धम्। 'यूस्त्र्याख्यौ नदी' इति नदीत्वात् 'अम्बार्थे'ति ह्रस्वत्वं तु न 'नेयङुवङ्स्थानावस्त्री' इति नदीत्वप्रतिषेधात्। सुलोपस्तु न, अङ्यन्तत्वात्।

स्त्रीणाम्—स्त्रीशब्दादामि 'यूस्त्र्याख्यौ नदी' इति नदीत्वात् 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'पर्यन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'स्त्रीणाम्' इति।

श्रियै ( ई. ३५ )—श्रीशब्दात् ङेविभक्तौ 'यूस्त्र्याख्यौ नदी' इति प्राप्तनदीत्वस्य 'नेयङुवङ्स्थानावस्त्री' इति निषेधे कृते 'ङिति ह्रस्वश्च' इत्यनेन विभाषया नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि अनुबन्धलोपे 'श्रियै' इति। नदीत्वाऽभावे इयङि 'श्रिये' इति।

श्रीणाम ( ई. ४१,६० )—श्रीशब्दादामि विभक्तौ 'वाऽमि' इति नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे पर्यन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'श्रीणाम्' इति। नदीत्वाभावे अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि 'श्रियाम्' इति भवति।

भ्रुवाम् ( ई. ३७ ) भ्रूशब्दात् सप्तम्येकवचने ङिविभक्तौ 'ङिति ह्रस्वश्च' इति विभाषया नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'आण्नद्याः' इति आटि 'आटश्च' इति वृद्धौ 'अचिश्नुधातु' इत्युवङि अनुबन्धलोपे 'भ्रुवाम्' इति। नदीत्वाभावे उवङि 'भ्रुवि' इति। षष्ठीबहुवचने तु 'वामि' इति विकल्पेन नदीसंज्ञायां भ्रूणां भ्रुवामिति रूपद्वयं भवति।

क्रोष्ट्री ( ई. ३४ )—क्रोष्टुशब्दात् स्त्रीत्वविवक्षायां 'स्त्रियां च' इति तृज्वद्भावे 'क्रोष्टृ' इति जाते 'ऋन्नेभ्यो ङीप्' इति ङीपि यणि 'क्रोष्ट्री' इति। तस्मात् सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम्।

स्वसा ( ई. ३७ )—स्वसृशब्दात् सौ 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते 'न षट्स्वस्रादिभ्यः पञ्चभ्यः' इति तन्निषेधे 'ऋदुशनस्पुरुदंशोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'स्वसन् स' इति जाते 'अप्तृन्तृच्—' इति दीर्घे हल्ङ्यादिलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे स्वसा इति।

इति अजन्तस्त्रीलिङ्गप्रकरणम्



# अथ अजन्तनपुंसकलिङ्गप्रकरणम्

**ज्ञानानि (ई. ४९,६०)**—ज्ञानशब्दात् जसि शसि च विभक्तौ 'जश्शसोः शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति 'शि' इत्यस्य सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इत्यनेन नुमि अनुबन्धलोपे 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे 'ज्ञानानि' इति ।

**कतरत् ( ई. ४७ )**—कतरशब्दात् सौ 'अतोऽम्' इति सूत्रं प्रबाध्य 'अद्ड्डुतरादिभ्यः पञ्चभ्यः' इति सोरद्डि अनुबन्धलोपे 'कतर अद्' इति दशायां क्लीवे 'शि' इत्यस्यैव सर्वनामस्थानसंज्ञाविधानात् असर्वनामस्थानिके 'अदि' परे 'यचि भम्' इत्यनेन 'कतर' इत्यस्य भसंज्ञायां 'टेः' इति टिलोपे 'वाऽवसाने' इति चर्त्वे 'कतरत्' इति । चर्त्वाऽभावे 'कतरद्' इति ।

**हे वारे ( ई. ४५ )**—वारिशब्दात् सम्बोधनैकवचने सौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इत्यस्यानित्यत्वपक्षे 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्तके गुणे 'हे वारे' इति । 'न लुमते'त्यस्य नित्यत्वपक्षे तु 'हे वारि' इति । अत एव 'हे त्रपो–हे त्रपु' इति भाष्योदाहरणं सङ्गच्छते ।

'न लुमते'त्यस्याऽनित्यत्वे किं मानम् ? इति चेच्छृणु—'इकोऽचि विभक्तौ' इत्यत्र अज्ग्रहणं किमर्थम्, हलादिषु भ्यामादिषु हि सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्ये'ति नस्य लोपसम्भवात् । न च सम्बुद्धिव्यावृत्त्यर्थमज्ग्रहणम्, अन्यथा तत्र नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधेन नकारश्रवणप्रसङ्गः इति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरभावात् । 'न लुमते'त्यस्याऽनित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुम् अज्ग्रहणं सफलमित्यज्ग्रहणं 'न लुमते'त्यस्याऽनित्यत्वे लिङ्गमिति तत्त्वविदः ।

**वारिणे ( ई. ३२ )**—वारिशब्दात् चतुर्थ्येकवचने 'वारि ए' इति दशायां 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे प्राप्ते 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधस्य प्रबलत्वात् 'इकोऽचि विभक्तौ' इति नुमि 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'वारिणे' इति जातम् ।

हे कतरद् ( ई. ४७ )—कतरशब्दात् सम्बोधनविवक्षायां सौ तस्य 'अद्डडतरादिभ्यः पञ्चभ्यः' इत्यनेन अद्डादेशे डित्वात् 'टेः' इत्यनेन टिलोपे हलङ्यादिना सुलोपे 'वावसाने' इत्यनेन चर्त्वे उक्तं रूपं सिद्धम्। ननु अद्विधाने नैव पररूपेण इष्टसिद्धेः ङित्करणं किमर्थमिति चेन्न, तथासति पररूपं बाधित्वा पूर्वसवर्णदीर्घापत्तेः। नचैवं पूर्वसवर्णदीर्घाऽभावाय सोर्दकार एव विधीयतामिति वाच्यम्, सोर्दकारादेशे सति तस्य स्थानिवत्वेन सम्बुद्धित्वात् ह्रस्वान्ताङ्गात्परत्वात् 'एङः ह्रस्वादि'ति सम्बुद्धिलोपः स्यात्।

अजरम् ( ई. ३६ )—अविद्यमाना जरा यस्य कुलस्येति विग्रहे 'नञो स्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इत्यनेन विद्यमानपदस्य लोपे 'गोस्त्रियोः' इति ह्रस्वे 'अजर' इति, तस्मादजरशब्दात् सौ तस्य अमादेशे पूर्वरूपे उक्तं रूपं सिद्धम्। जरसादेशस्तु न, सन्निपातपरिभाषाविरोधात्।

अजरसम् ( ई. ४५, ४८, ५५ )—'अजर अम्' इति स्थिते 'स्वमोर्नपुंसकात्' इति लुक्प्राप्तस्तं बाधित्वा तदपवादः 'अतोऽम्' इत्यम्भावः प्राप्तः, तं बाधित्वा 'विप्रतिषेधे परं कार्यम्' इति परत्वाज्जरस्, 'अजरसम्' इति। न च लुगपवादस्याम्भावस्य जरसादेशेन बाधितत्वात् 'अपवादे निषिद्धं पुनरुत्सर्गस्य स्थितिः' इति न्यायात् अमो लुक् स्यादिति वाच्यम्? जरसादेशान्तरम्-अम्सन्निपातमाश्रित्य प्रवृत्तस्य जरसः अमो लुकि निमित्तत्वाभावादित्यलम्।

अजरांसि ( ई. ३३, ५२, ५३ )—अजरशब्दात् जसि अनुबन्धलोपे 'अजर अस्' इतिस्थिते जरसः पूर्वमेव शिभावे कृते तस्य सर्वनामस्थानत्वात् तस्मिन् परे नुमजरसोः प्राप्तयोः नुमपेक्षया परत्वाज्जरसि ततो झलन्तत्वान्नुमि 'सान्तमहतः संयोगस्य' इति दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'अजरांसि' इति।

उदानि (ई. ४४, ५६)—उदशब्दात् शसि विभक्तौ 'जश्शसोः शिः' इत्यनेन शसः शिभावे 'पद्दन्' इत्यादिसूत्रेण उदन्नादेशे 'सर्वनामस्थाने चे'ति दीर्घे 'उदानि' इति सिद्धम्। 'अल्लोपोऽनः' इत्यनेन अल्लोपस्तु न, शेः सर्वनामस्थानत्वात्।

हृन्दि ( ई. ३५ )—हृदयशब्दात् शसि शसः शिभावे 'पद्दन्' इत्यादिसूत्रेण हृदयस्य हृदादेशे 'नपुंसकस्य झलचः' इति ऋकारात् परतो नुमि 'नश्चापदान्तस्य' इत्यनुस्वारे तस्य परसवर्णे नकारे उक्तं रूपं सिद्धम्।

**उदुना ( ई० ३९ )**—उदकशब्दात् तृतीयैकवचने 'उदक आ' इति स्थिते 'पद्दन्नोमास्—' इति सूत्रेण उदकशब्दस्य उदन्नादेशे अल्लोपे 'उदना' इति सिद्धम् ।

**आसानि ( ई० ४२ )**—आस्यशब्दात् शसि 'जश्शसोः शिः' इति शसः शिभावे 'पद्दन्नोमास' इत्यादिसूत्रेण आस्यशब्दस्य आसन्नादेशे । 'शिसर्वनामस्थानमि'ति सूत्रेण सर्वनामस्थानसंज्ञायाम् 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे 'आसानि इति सिद्धम् ।

**आस्ना ( ई० ३७ )**—आस्यशब्दात् टाविभक्तौ 'पद्दन्न' इति सूत्रेण आस्यशब्दस्य आसन्नादेशे 'अल्लोपो नः' इति टिल्लोपे 'आस्ना' इति ।

**श्रीपाय ( ई० ४५, ५२, ५५ )**—श्रीपाशब्दात् ङौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे 'श्रीपाय' इति । सन्निपातपरिभाषा' तु 'कष्टाय क्रमणे' इति निर्देशात् न प्रवर्तते । ( नन्वत्र ह्रस्वत्वे कृतेऽपि 'प' इत्यस्य 'एकदेशविकृत' न्यायेन धातुत्वानपायात् दीर्घे कृते आकारान्तत्वाच्च 'आतो धातोः' इत्याल्लोपः स्यात् , यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च तस्मिन् परे भत्वस्यापि सत्त्वादिति चेन्न, 'सन्निपातपरिभाषा' विरोधात् । तथाहि—ह्रस्वत्वमवर्णत्वञ्च समुदितं यादेशस्य उपजीव्यम् , तत्र 'कष्टाय' इति निर्देशात् सन्निपातपरिभाषां बाधित्वा कृतेऽपि दीर्घे ह्रस्वांश एव निवृत्तिः । अवर्णत्वांशस्त्वनुवृत्त एव, तस्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति, भवेदेव सन्निपातपरिभाषाविरोधः । वस्तु तस्तु—'आतो धातोः' इत्यत्र 'लक्षणप्रतिपदोक्त' परिभाषया प्रतिपदोक्ताऽऽकारस्य ग्रहणात् प्रकृते आकारस्य लाक्षणिकत्वेन लोपप्रसक्तिरेव नास्तीति दिक् । )

**न लुमताङ्गस्यानित्यत्वात्**—अयम्भावः 'इकोऽचि विभक्तौ' इति सूत्रेणाजादिविभक्तौ हलादिविभक्तौ च सर्वत्रैव नुमि सति, अजादिषु नुम इष्टत्वात् हलादिषु च 'स्वादिष्वसर्वनामस्थाने' इति सूत्रेण पदसंज्ञायाम् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे वारिभ्यामित्यादिप्रयोगे नास्ति किमपि दूषणमिति अज्ग्रहणं व्यर्थं सत् 'न लुमताङ्गस्य' इति सूत्रस्यानित्यत्वं ज्ञापयति । एवञ्च 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रेण सम्बुद्धौ सुविभक्तित्वाश्रयणेन नुमि, 'न ङिसम्बुद्ध्योः' इति नलोपनिषेधे हे वारिन्नित्यनिष्टं रूपं स्यादिति स्वांसे चरितार्थम् । फलञ्चात्रैव 'हे वारे' इत्यत्र 'ह्रस्वस्य गुणः' इति गुणरूपम् ।

वृद्ध्यौत्त्वेति ( ई. ४७, ४९ )—'अचोञ्णिति इति वृद्धेः, अच्च घेः इ
औत्वात्, तृज्वत्क्रोष्टुः इति तृज्वद्भावात्, घेर्ङिति इति गुणात् पूर्वं पूर्वविप्र
षेधेन नुम्' इति वार्तिकस्यार्थः । 'अतिसखिनी' 'वारिणी' प्रियक्रोष्टूनि' 'वारिणे'
क्रमेण उदाहरणानि ।

वारीणाम् ( ई. ४५ )—वारिशब्दाद् आम्विभक्तौ 'वारि आम्' इति स्थि
परत्वात् नुटं बाधित्वा 'इकोऽचि विभक्तौ' इत्यनेन नुमि, तं बाधित्वा—'नु
, चिरे'ति नुटि 'नामि' इति दीर्घे, 'अट्कुप्वाङ्' इति णत्वे 'वारीणाम्' इति। नु
कृते तु 'नामि' इति दीर्घो न स्यात्, सन्निपातपरिभाषाविरोधात् ।

अतिदध्ना ( ई. ४९ )—दधि अतिक्रान्तं कुलमतिदधि, तस्य तृतीयैकव
'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनेन विधीयमानस्यानङादेशस्य अङ्गाधिक
स्थत्वेन 'पदाङ्गाधिकारे' इति परिभाषया तदन्तस्यातिदधिशब्दस्याप्यनङि
रूपं सिद्धम् ।

स्नूनि (.ई. ३७, ५४ )—सानुशब्दस्य द्वितीयाबहुवचने शसि 'मांसपृतन
सानूनां मांसपृत्स्नवो वाच्यः शसादौ वा' इसि वार्तिकेन 'स्नु' आदेशे 'जश्शसोः शि
इति श्यादेशे 'इकोऽचि विभक्तौ' इति नुमि उपधादीर्घे 'स्नूनि' इति । शसा
वेत्युक्तत्वात् पक्षे 'सानूनि' इति च भवति ।

प्रियक्रोष्टूनि ( ई. ४८ )—प्रियक्रोष्टुशब्दाज्जसि विभक्तौ जसः शिभ
'प्रियक्रोष्टु इ' इति स्थिते 'तृज्वत्क्रोष्टुः' इत्यनेन प्राप्तं तृज्वद्भावं बाधित्वा पूर्वविप्र
षेधेन नुमि 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्यनेन दीर्घे उक्तं रूपं सिद्धम् ।

प्रियक्रोष्टुने ( ई. ४६ )—प्रियक्रोष्टुशब्दात् चतुर्थ्येकवचने तृतीयादिषु
पुंवत्वाभावपक्षे 'वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन' इति वार्तिकेन तृज
द्भावात् पूर्वप्रतिषेधेन नुमि उक्तं रूपं सिद्धम् ।

सुलुना ( ई. ४२ )—पुष्टु लुनाति=छिनत्तीति सुलु ( अस्त्रविशेषः ) । त
तृतीयैकवचने–'सुल्वा–' 'सुलुना' इति भवति । तत्र हि—शोभनलवनकर्तृत्वस्य पु
पुंसकयोरेकमेव प्रवृत्तिनिमित्तमिति भाषितपुंस्कत्वात् 'तृतीयादिष्वि'ति पुंवत्त्व
'ओः सुपि' इत्यनेन यण् । नाभावस्तु न, पुंवत्त्वे ह्रस्वाभावेनाऽघित्वात् । पुंव
भावपक्षे तु ह्रस्वे कृते यणं बाधित्वा नुमि 'सुलुना' इति ।

अनादये ( ई. ३१, ३४ )—न आदिः=अनादिः, तस्मै 'अनादये–अनादिने इति । अनादिशब्दात् ङेविभक्तौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति विभाषया पुंवत्वे सति 'इकोऽचि विभक्तौ' इति नुमोऽप्रवृत्तेः 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे अयादेशे 'अनादये' इति । पुंवत्त्वाऽभावपक्षे—नुमि 'अनादिने' इति ।

( अनादिशब्दस्य कथं भाषितपुंस्कत्वमिति चेच्छृणु–भाषितः पुमान् येन प्रवृत्त-निमित्तेन तत् भाषितपुंस्कम् अर्थात् नपुंसकत्वे लिङ्गान्तरे च यस्य एकमेव वाच्य-तावच्छेदकं तत् शब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम् । अनादिशब्दश्च उत्प-त्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुन्नपुंसकतत्तद्व्यक्तिप्रत्यायकः इति, भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कतेति तत्त्वविदः ।

उक्तं च—

यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते ।
क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते ॥ इति ॥

शब्दः पुंस्त्वे यमर्थं भजते यच्च शब्दस्वरूपं भजते, तमेवार्थं प्रधानीकृत्य शब्द स्वरूपमपि पुंवदेव भवेच्चेत् स शब्दः भाषितपुंस्कसंज्ञां लभत इति तात्पर्यार्थः । )

दध्ना (ई. ५७, ६०)—दधिशब्दाट्टाविभक्तौ 'दधि आ' इति स्थिते 'अस्थि-दधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनङि अनुबन्धलोपे 'यचि भम्' इति भसंज्ञायाम् 'अल्लोपो नः' इत्यनोऽकारस्य लोपे 'दध्ना' इति ।

दध्ने ( ई. ३४ )—दधिशब्दाद् ङेविभक्तौ 'अस्थिदधि' इत्यनङि भत्वात् 'अल्लोपो नः' इत्यल्लोपे 'दध्ने' इति ।

दध्नि—दधिशब्दात् ङिविभक्तौ 'अस्थिदधि–' इत्यनङि 'विभाषा ङिश्योः' इति अनोऽकारस्य लोपे 'दध्नि' इति । पक्षे 'दधनि' इति ।

पीलुने ( ई. ३० )—पीलुर्वृक्षः, तत्फलं पीलु, तस्मै 'पीलुने' इति । 'इकोऽचि विभक्तौ' इति नुम् । अत्र 'तृतीयादिषि'ति न पुंवत्वं, प्रवृत्तिनिमित्तभेदात् । तथा हि—वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम्, फलविशेषे वाच्ये तु फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तम्, इति प्रवृत्तिनिमित्तभेदेन भाषितपुंस्कत्वाभावान्न पुंवदित्युक्तिः सङ्गतेति । तदुक्तं—

पीलुर्वृक्षः फलं पीलु, तस्मै पीलुने न तु पीलवे ।
वृत्ते निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥ इति ॥

प्राणाम ( ई. ४७, ४९, ५१, ५२, ६१ )—प्रकृष्टः राः=धनं, यस्य' इति बहुव्रीहौ प्रैशब्दः । तस्य नपुंसकह्रस्वत्वे 'प्रि इति' तस्मादामि 'ह्रस्वनद्यापो नुट्' इति नुटि 'इकोऽचि विभक्तौ' इति नुमि च प्राप्ते 'नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधान्नुमं बाधित्वा नुटि 'रायो हलि' इत्यात्वे णत्वे 'प्राणाम्' इति माधवः ।

वस्तुतस्तु—ह्रस्वान्तमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकत्वं प्रति निमित्तत्वाऽसम्भवात् नुटि कृते आत्वं न भवतीति 'प्रीणाम्' इत्येव साधु ।

प्राभ्याम् ( ई. ३३, ५२ )—प्रकृष्टो राः धनं यस्येति विग्रहे निष्पन्नात् प्रैशब्दात् भ्यामि 'ह्रस्वो नपुंसके–' इत्यनेन 'एच इग्घ्रस्वादेशे' इति नियमेन एच् रूपस्य ऐकारस्य इकारे ह्रस्वे कृते 'एकदेशविकृतन्यायेन' 'रायो हलि' इत्यात्वे 'प्राभ्याम्' इति निष्पन्नम् ।

सुनूनि ( ई. ४१ )—सु=शोभना नौर्यस्य तत् 'सुनु' । सुनौशब्दात् जसि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे 'जश्शसोः शिः' इति शिभावे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे 'सुनूनि' इति सिद्धम् ।

सुधिया ( ई. ३२ )—'सुष्ठु ध्यायति' इति विग्रहे निष्पन्नात् सुधीशब्दात् तृतीयैकवचने 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावे सति 'अचि श्नुधातु–' इतीयङि अनुबन्धलोपे 'सुधिया' इति 'पुंवद्भावाभावपक्षे 'ह्रस्वो नपुंसके–' इति ह्रस्वे इकोऽचि विभक्तौ' इति नुमि 'सुधिना' इति । अत्र सुधातृत्वस्य, शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च सत्त्वात् भाषितपुंस्कत्वमुपपन्नमिति ध्येयम् ।

इति अजन्तनपुंसकलिङ्गप्रकरणम्



## अथ हलन्तपुँल्लिङ्गप्रकरणम्

लिट्त्सु ( ई. ५५ )—लिह्शब्दात्सुपि अनुबन्धलोपे 'लिह् सु' इति स्थिते 'हो ढः' इत्यनेन हस्य ढत्वे 'जलां जशोऽन्ते' इत्यनेन ढस्य जश्त्वेन डकारे 'लिड् सु' इति दशायां 'डः सि धुट्' इति डस्य धुटि अनुबन्धलोपे 'लिड् ध् सु' इति जाते 'खरि च' इत्यनेन धस्य चर्त्वेन तकारे पुनः 'खरि च' इति डस्य चर्त्वेन टकारे 'लिट्त्सु' इति। धुडभावपक्षे डकारस्य चर्त्वेन टकारे 'लिट्सु' इति।

धुक् ( ई. ३८ )—'दुह्' इति क्विबन्तप्रातिपदिकात् सौ 'हल्ङ्याब्भ्यः—' इति सुलोपे 'हो ढः' इति ढत्वं प्रबाध्य 'दादेर्धातोर्घः' इति हस्य घत्वे कृते झषन्तत्वात् 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावे घस्य जश्त्वे 'वाऽवसाने' इति गस्य चर्त्वे 'धुक्' इति। पक्षे 'धुग्' इति। ननु घत्वे कृते 'दुघ्' इति झषन्तमेकाच्कम्, तस्य धातुत्वात् धात्ववयवत्वाऽभावात् कथमिह दकारस्य भष्भावेन धकारः स्यादिति चेन्न 'राहोश्शिरः' इतिवत् व्यपदेशिवद्भावेन धात्ववयवत्वात्तत्सिद्धेः।

उपदेशे किम ( ई. ५५ )—अयम्भावः भाष्ये धुगित्यत्र घत्वस्यासिद्धत्वात् ढत्वं प्राप्नोतीत्याशंक्य अपवादत्वात् घत्वमिति समाधाय अथवा होढोऽदादेः, धातोर्घः' इति योगं विभज्य, उत्तरयोगे नञ्रहितदादिपदानुवृत्तिरित्युक्तम्। तदनुवृत्तिर्व्यर्थी सति उपदेश इत्यर्थं बोधयति, तदभावे 'अधोग्' इत्यत्र सत्यडागमे दादित्वाऽभावात् घत्वं न स्यादित्यव्याप्तिः, दामलिहमात्मनः इच्छति दामलिह्यति ततः क्विपि अल्लोपे यलोपे च कृते प्रातिपदिकत्वात् सौ सोलोंपे 'दामलिट्' इत्यादौ दादित्वेन घत्वं स्यादित्यव्याप्तिरिति भावः।

'दादेर्धातोर्घः' इति सूत्रे उपदेशपदस्य कथं लाभः? 'दादेर्धातोर्घः' इत्यत्र धातोरित्यावर्तते, एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति—धातोरवयवस्य हस्येति। द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति। तेन 'दादेर्धातोर्घः' इत्यस्य उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते चेत्यर्थः सम्पन्नः। अत्र उपदेश इति किम्? अधोक् इत्यत्र यथा स्यात्, दामलिहमात्मानमिच्छति दामलिह्यति; ततः क्विपि दामलिट् अत्र माभूत्। तथाहि—उपदेशपदाभावे आगमसमभिव्याहारे आगमविशिष्टस्य धातुत्वात्तस्य च दादित्वाभावादधोगित्यत्र धत्वं न स्यादित्यव्याप्तिः। दामलिडित्यत्र दादित्वाद् घत्वं स्यादित्यतिव्याप्तिर्दोषस्तद्वारणा-

योपदेशपदमावश्यकम् । कृते चोपदेशे अधोगित्यत्रौपदेशिकदादित्वस्य सत्वेन घत्वं सिद्धम् । दामलिडित्यत्रौपदेशिकदादित्वाभावान्न घत्वं, किन्तु 'हो ढः' इति ढत्वमेव भवतीति ।

एकाच इति–अयम्भावः—'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति सूत्रे 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वम्' इति न्यायेन 'एकाचः' इति धातोरेव विशेषणं भवितुमर्हति । तथाच—गर्धप् गर्धब् इत्यादौ धातोरेकाच्त्वाभावेन भष्भावो न स्यादिति लक्ष्यानुरोधेन क्वचिद् वैयधिकरण्येनान्वयो भवति । ततश्च धातोरवयवो य एकाच् झषन्तस्तदवयवस्येत्यादिसूत्रार्थेनोक्तप्रयोगे भष्भावसिद्धिः । धुगित्यादौ धातुरेवैकाच् न तु तदवयव इति व्यपदेशिवद्भावेनैकाच्त्वमाश्रित्य भष्भावसिद्धिः ।

गर्धप् ( ई. ३३, ४४, ४९ )—गर्दभमाचष्टे इति विग्रहे णिचि तदन्तात् कर्तरि क्विपि तस्य सर्वापहारे 'णेरनिटि' इति णिलोपे 'गर्दभ्' इति । तस्मात् गर्दभ्शब्दात् सौ 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इत्यनेन दस्य भष्भावे सुलोपे भकारस्य चर्त्वे 'गर्धप्'इति । (न च 'एकाच' इति सूत्रे 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्' इति न्यायेन एकाच् झषन्तो यो धातुस्तदवयवस्य बश इत्यनेनान्वयो युक्तः,न तु–धातोरवयवो य एकाच् झषन्तस्तदवयवस्येति वैयधिकरण्येनान्वयो युक्त इति वाच्यम् , सामानाधिकरण्येनान्वये 'गर्धप्' इत्यत्र 'गर्दभ्' इत्यस्य सुब्धातोरनेकाच्त्वात् दकारस्य भष्भावो न स्यात् । धात्ववयवस्य झषन्तस्येति वैयधिकरण्यान्वये तु 'दभ्' इति एकाचो झषन्तस्य धात्ववयवत्वात् तदवयवस्य दस्य भष्भावे इष्टं रूपं सिद्ध्यतीति दिक् । )

विश्वौहः ( ई. ४८ )—विश्ववाह्शब्दाच्छसि विश्ववाह् अस् , इति स्थिते 'यचि भम्' इत्यनेन भसंज्ञायाम् 'इग्यणः सम्प्रसारणम्' इत्यनेन 'सम्प्रसारणसंज्ञायां च कृतायां 'वाह ऊठ्' इत्यनेन वकारस्य सम्प्रसारणे ऊठि 'सम्प्रसारणाच्च' इति पूर्वरूपे 'एत्येधत्यूठ्सु' इति वृद्धौ सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

अनड्वान् ( ई. ४५, ४८, ५२,६० )—अनडुह्शब्दात् सौ 'चतुरनडुहोरामुदात्तः' इत्यामि 'इको यणचि' इति यणादेशे 'सावनडुहः' इति नुमि सुलोपे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे नुम्विधसामर्थ्यात् 'वसुस्रंसुध्वंस्वनडुहां दः' । इति दत्वाभावे 'अनवान्' इति । अत्र विशेषविहितेन नुमा सामान्यविहि-

त्स्यामः तक्रकौण्डिन्यन्यायेन बाधात् कथम् आमिति न शंक्यम् , 'आच्छीनद्योर्नुम्' इति सूत्रात् आदित्यनुवृत्त्या अनडुह्शब्दसम्बन्ध्यावर्णात्परो नुमित्यर्थे उपजीव्यविरोधेनाबाधात् ,

विस्तरस्त्वथम—'अनडुह्' शब्दात् सौ 'चतुरनडुहोरि'त्यामि यणि 'सावनडुहः'इति नुमि सुलोपे संयोगान्तलोपः । अत्र नलोपस्तु न, संयोगान्तलोपस्याऽसिद्धत्वात् । एवं नकारस्य दत्वमपि न, नुम्विधानस्य वैयर्थ्यापत्तेः । तथाहि—नुमभावेऽपि हकारस्य दत्वे 'अनड्वाद्' इत्यनिष्टप्रयोगसिद्धौ नुम्विधेरनर्थकत्वात् । न च 'चतुरनडुहोरि'त्याम् सामान्यविहितः तदपेक्षया 'सावनडुहः' इति नुम् विशेषविहितः, तथा च तक्रकौण्डिन्यन्यायमूलक'येन नाप्राप्ति'न्यायेन नुमा आमो बाधे 'अनडुद्' इति स्यात् , किञ्च सम्बुद्धौ विशेषविहितत्वात् 'असम्बुद्धौ' इति अमा नुमो बाधे सति ढत्वेन 'हे अनड्वट्' इति स्यादिति चेच्छृणु—'सावनडुहः' इत्यत्र 'आच्छीनद्योर्नुम्' इत्यतः 'आत्' इत्यनुवर्तते, ततश्च अनडुहोऽवर्णात् परो नुमित्यर्थेन अवर्णात् परत्वेन विधीयमानं नुमं प्रति आमः उपजीव्यत्वात् उपजीव्योपजीवकयोर्विरोधाभावेन बाध्यबाधकभावविरहात् । एवम् 'असम्बुद्धौ' इति विहिताऽम्प्रति नुमः उपजीवकत्वेन विरोधाऽभावात् । उपजीव्योपजीवकयोर्बाध्यबाधकभावो न भवतीत्यत्र 'पितुरुत्पन्नः पुत्रः पितरं न हन्यात् , पिता च पुत्रं न हन्यात्' इत्येव मानम् ।

सावनडुहः—'सावनडुहः' इति सूत्रे 'आच्छीनद्योर्नुम्' इत्यत आदिति पदमनुवर्तते । ततश्चावर्णात्परानडुह्शब्दस्य नुम् स्यात्सौ परे इति सूत्रार्थो भवति । एवञ्च 'चतुरनडुहोरामुदात्तः' इति सूत्रविहितस्यामः' सर्वनामस्थानविषयो भवति 'सावनडुहः' इतिविहितस्य नुमस्तु सुरेव विषय इति आदित्यधिकारात् विशेषविहितेनापि नुमा आमो बाधको न भवति । यदि नुमा आम्बाधः स्यात्तदा 'आत्' इत्यधिकार एव व्यर्थः स्यादिति उपजीव्यविरोधः स्यात् । एवं रीत्या अमा च नुम् न बाध्यते । नुम्विधिसामर्थ्याद्दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न ।

हे अनड्वन् ( ई. ४० )—अनडुह्शब्दात् सम्बोधनविवक्षायां सौ 'अम्सम्बुद्धौ' इत्यमि मित्वादन्त्यादचः परे कृते 'अनडु अह् सु' इति स्थिते यणि 'साव-

नडुहः' इति नुमि हल्ङ्यादिना सुलोपे 'संयोगान्तस्य लोपः' इति हलोपे 'हे अनड्वन्' इति जातम् ।

तुराषाट् ( ई. ५०,५३ )—तुरं सहते इति विग्रहे 'छन्दसि सहः' इति सूत्रेण ण्विप्रत्यये अनुबन्धलोपे 'नहिवृति—' इति वृद्धौ अपृक्तलोपे 'तुरासाह' इति । लोके तु सहेर्ण्यन्तात् क्विपि अपृक्तलोपे 'अन्येषां पूर्वपदस्य दीर्घः' इति दीर्घे 'तुरासाह्' इति । तस्मात् तुरासाह्शब्दात् सौ सोर्हल्ङ्यादिलोपे 'हो ढः' इति ह्रस्य ढत्वे ढस्य जश्त्वे 'सहेः साढः सः' इति षत्वे चर्त्वे 'तुराषाट' इति ।

चतुर्ण्णाम (ई. ३४,४९,५५)—'चतुर' शब्दात् आमि 'षट् चतुर्भ्यश्च' इति नुटि 'रषाभ्यां नो णः समानपदे' इति णत्वे 'अचो रहाभ्यां द्वे' इति वा द्वित्वे 'चतुर्ण्णाम्–चतुर्णाम्' इति । नच पूर्वत्रासिद्धीयमद्विर्वचने' इति बलात् णत्वं प्रति द्वित्वस्याऽसिद्धत्वाभावात् परत्वात् द्वित्वे णत्वं युक्तमिति वाच्यम् , 'द्वित्वं परसवर्णत्वं सिद्धं वक्तव्यम्' इति वार्तिकारम्भसामर्थ्यात् वर्णद्वित्वे तदप्रवृत्तेः । ननु वाक्, वाग्गिति भाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृत्तिरावश्यकीति चेन्न, द्वित्वे कर्तव्येऽन्यदसिद्धं न, द्वित्वं त्वसिद्धमेवेत्यर्थकरणेनादोषात् ।

णत्वं द्वित्वं चतुर्ण्णाम् – ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वे कर्त्तव्ये 'पूर्वत्रासिद्धम्' इति सूत्राप्रवृत्त्या परत्वात् द्वित्वे ततो णत्वमित्येव लेख्यमिति चेन्न, 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वे कर्त्तव्ये, अन्यदसिद्धं न भवति । द्वित्वं यदि परं स्यात्तदसिद्धं स्यादेवेत्यर्थेन द्वित्वस्यासिद्धत्वाद् णत्वं द्वित्वमिति मूलस्य युक्तत्वात् ।

चतुर्षु (ई. ४४, ६१)—'चतुर्' शब्दात् सुपि विभक्तौ 'चतुर् सु' इति स्थिते रेफस्य विसर्गे प्राप्ते 'रोः सुपि' इत्यनेन निषेधे रेफस्य इण्त्वेन 'आदेशप्रत्यययोः' इत्यनेन षत्वे 'चतुर्षु' इति । नच 'अचोरहाभ्यां द्वे' इत्यनेन षकारस्य द्वित्वं कुतो नेति वाच्यम् ? 'शरोऽचि' इत्यनेन निषेधः स्यात् ।

प्रियचत्वाः (ई. ३८)—प्रियाश्चत्वारो यस्येति बहुव्रीहौ विशेष्यनिघ्नत्वेन एकद्वि-बहुवचनान्तः प्रियचतुर्शब्दो निष्पन्नः । तस्मात्प्रियचतुर्शब्दात् सौ 'चतुरनडुहोरामुदात्तः' इत्यनेन आङ्त्वात्तदन्तेऽपि आमि उकारस्य यणि हल्ङ्यादिना सुलोपे रेफस्य विसर्गे उक्तं रूपं सिद्धम् ।

**प्रियचतुराम** ( ई. ३७, ४६ )—प्रियाश्चत्वारो यस्य स 'प्रियचत्वाः', तेषां 'प्रियचतुराम्' । बहुव्रीहौ प्रियचतुर् शब्दो विशेष्यनिघ्नः एक-द्वि-बहुवचनान्तः । उक्तप्रयोगे तु 'प्रियचतुर् आम्' इति स्थिते इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वरूपगौणत्वस्य सत्त्वात् गौणमुख्यन्यायेन 'षट्चतुर्भ्यश्च' इत्यस्याप्रवृत्त्या नुड् न ।

**अकच्सहितस्याप्ययमादेशः**—अयम्भावः, 'किमः कः' इति सूत्रे 'इमः अः' इति न्यासे त्यदाद्यनुवृत्त्या त्यदादेरिमोऽः स्यादित्यर्थेनैव सिद्धे ककारोच्चारणं व्यर्थं सत् अकच्सहितस्याप्ययमादेश इति ज्ञापयति तेन साकचि कक इति रूपन्नेति । न च त्यदादौ किम्-शब्दस्य पाठाभावेन कथमादेश इति वाच्यम्, त्यदादौ पाठकरणेनादोषात् । कुतिहोरित्यत्र उतिहोरिति न्यासेन क्वातीत्यत्र वातीति न्यासेन सर्वदोषपरिहार इति ।

**किमः कः इति**—ननु 'इमः अः' इति न्यासेऽपि किम् शब्दस्य द्वेः प्राक् पाठकरणेन 'त्यदादीनामः' इति सम्पूर्णसूत्रानुवृत्त्या 'त्यदादीनामिमः अः स्यादि-त्यर्थेन 'कः' इत्यादिप्रयोगसिद्धौ 'किमः कः' इति सूत्रे ककारोपादानं व्यर्थमिति चेन्न, ककारोपादानस्य अकचसहितस्य विधानार्थत्वात् । नचोक्तन्यासे 'अलोन्त्यस्य' इति सूत्रेण मकारस्यैव आदेशः स्यादिति वाच्यम्, 'नानर्थकेऽलोन्त्यविधि-रनभ्यासविकारे' इति निषेधात् ।

**आभ्याम्** ( ई. ५२, ५६, ५७ )—इदम् शब्दात् भ्यामि विभक्तौ 'त्यदा, दीनामः' इत्यनेन अत्वे 'अतो गुणे' इति पररूपे 'इद भ्याम्' इति जाते 'हलि लोपः' इत्यनेन 'अलोन्त्यस्ये'ति परिभाषया अन्त्यस्य दकारस्य लोपे प्राप्ते 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' इति परिभाषया अलोन्त्यविध्यभावे इद्भाग-स्यैव लोपे 'अ भ्याम्' इति स्थिते 'आद्यन्तवदेकस्मिन्' इत्येकस्मिन्नेवाऽकारे अन्तवद्भावेन अदन्तत्वं मत्वा 'सुपि चे'ति दीर्घे 'आभ्याम्' इति सिद्धम् ।

**एभिः** ( ई. ४२, ४९ )—इदम्शब्दात् भिसि अत्वे पररूपे 'इद भिस' इति जाते 'अतो भिस ऐस्' इति भिसः ऐसि प्राप्ते 'नेदमदसोरकोः' इति निषेधे 'हलि लोपः' इत्यनेन इद्भागस्य लोपे 'बहुवचने झल्येत्' इत्वेत्वे सस्य रुत्वे विसर्गे 'एभिः' इति ।

'इदम्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई. ३३ )—

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| अयम् | इमौ | इमे | इयम् | इमे | इमाः |
| इमम् (एनम्) | इमौ (एनौ) | इमान् (एनान्) | इमाम् (एनाम्) | इमे (एने) | इमाः (एनाः) |
| अनेन (एनेन) | आभ्याम् | एभिः | अनया (एनया) | आभ्याम् | आभिः |
| अस्मै | आभ्याम् | एभ्यः | अस्यै | आभ्याम् | आभ्यः |
| अस्मात् | आभ्याम् | एभ्यः | अस्याः | आभ्याम् | आभ्यः |
| अस्य | अनयोः (एनयोः) | एषाम् | अस्याः | अनयोः (एनयोः) | आसाम् |
| अस्मिन् | अनयोः ,, | एषु | अस्याम् | अनयोः ,, | आसु |

नपुंसके—

| | | |
|---|---|---|
| इदम् | इमे | इमानि |
| इदम् ( एनत्-द् ) | इमे ( एने ) | इमानि ( एनानि ) |
| अनेन ( एनेन ) | आभ्याम् | एभिः |
| अस्मै | आभ्याम् | एभ्यः |
| अस्मात् | आभ्याम् | एभ्यः |
| अस्य | अनयोः ( एनयोः ) | एषाम् |
| अस्मिन् | अनयोः ,, | एषु |

( त्यदादेः सम्बोधनं नास्ति )

**अश्वचनं साकच्कार्थम्**—ननु 'इदमोऽन्वादेशे' इति सूत्रे अनुदात्तमात्रविधानेन 'आभ्याम्' इत्यादिसिद्धौ 'अश्' विधानं किमर्थमिति चेन्न, साकचि 'हलि लोपः' इत्यस्याप्राप्त्या तत्र 'आभ्याम्' इति सिद्धये 'अश्' विधानस्यावश्यकत्वात् ।

**राज्ञः ( ई. ४८,५५,५६,६० )**—राजन्शब्दाच्छसि भसंज्ञायामल्लोपोऽन इत्यल्लोपे स्तोः श्चुना श्चुरिति श्चुत्वे 'राज्ञः' इति । न चात्र पञ्चमीसमासपक्षेऽल्लोपस्य स्थानिवत्त्वात्कथं श्चुत्वमिति वाच्यम्; पूर्वत्रासिद्धे न स्थानिवदिति निषेधात् । नचाऽन्तरङ्गे श्चुत्वे कर्त्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वात् कथं श्चुत्वमिति वाच्यम्, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतया परिभाषाया एवाप्राप्तेः । वाह ऊठित्यत्रोठग्रहणेन ज्ञापितत्वादियं षाष्ठी ।

राज्ञः—राजन् अस् इति स्थिते 'अल्लोपोऽनः' इति सूत्रेणाकारलोपे 'स्तोः श्चुना श्चुः' इति श्चुत्वेन ञकारे 'राज्ञः' इति सिद्धमिति। तत्र 'अचः परस्मिन् पूर्वविधौ' इति शस्प्रत्ययं निमित्तीकृत्य भसंज्ञाद्वारा जायमानस्य अल्लोपरूपाजादेशस्य स्थानिभूताकारात्पूर्वत्वेन दृष्टत्वात् जकारात्परस्य नकारस्य श्चुत्वे कर्तव्ये स्थानिवद्भावेन श्चुत्वप्रतिबन्धो न वाच्यः 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यनेन तन्निषेधात्। नचाल्लोपस्य बहिर्भूतशस्प्रत्ययनिमित्तकतया बहिरङ्गत्वेनान्तर्भूतजकारयोगनिमित्तकतयाऽन्तरङ्गश्चुत्वदृष्ट्या 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयासिद्धत्वेन पुनरपि श्चुत्वं न स्यादिति वाच्यम्, तस्याः परिभाषाया 'वाह ऊठ्' इति सूत्रस्थोठ्ग्रहणज्ञापित तया सापादिकत्वेन यथोद्देशपक्षे तद्दृष्ट्या त्रैपादिकश्चुत्वस्यासिद्धतया तत्र तस्याः परिभाषाया अप्रवृत्त्याऽल्लोपस्यासिद्धत्वाभावात्। कार्यकालपक्षे यद्यपि परिभाषाया विधिदेशस्थनया तद्दृष्ट्या श्चुत्वस्यासिद्धतया, तथा श्चुत्वस्यासिद्धता बोधयितुं शक्यते इति पुनर्दोषतादवस्थ्यं तथाप्येकपक्षेणेष्टसिद्धौ पक्षान्तरेण दूषणदानस्यानुचितत्वान्न दोषः।

राजभ्याम् ( ई. ४१,४७ )—'राजन् भ्याम्' इति स्थिते स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'राज भ्याम्' इति स्थिते 'सुपि चे'ति दीर्घे प्राप्ते 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति नलोपस्याऽसिद्धत्वात् दीर्घाऽभावे 'राजभ्याम्' इति।

प्रतिदीव्नः ( ई. ४५, ५० )—प्रतिदिवन्शब्दात् शसि भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनेनाकारस्य लोपे 'हलि च' इत्यनेन दीर्घे सस्य रुत्वे विसर्गे च 'प्रतिदीव्नः' इत्यस्य सिद्धिः।

ननु अल्लोपस्य 'अचः परस्मिन् पूर्वविधौ' इत्यनेन स्थानिभूतादचो लुप्ताकारात्पूर्वत्वेन दृष्टस्य इकारस्य दीर्घे कर्तव्ये स्थानिवद्भावेन वकारान्तधातोर्हल्व्यवहितपूर्वत्वाभावेन कथं दीर्घ इति चेन्न, दीर्घे कर्तव्ये स्थानिवद्भावस्य 'न पदान्त—' इति निषेधात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति तु न, यथोद्देशपक्षे 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषायाः 'वाह ऊठ' इति सूत्रस्थोठ्ग्रहणज्ञापिततया सापादिकत्वेन तद्दृष्ट्या 'हलि च' इति शास्त्रस्य त्रैपादिकत्वेनासिद्धतया तद्विषये तत्परिभाषाया अप्रवृत्तेः। कार्यकालपक्षेण तु दोषदानमनुचितं, पक्षान्तरेणेष्टसिद्धेः।

वृत्रहा ( ई. ३६ )—वृत्रो नाम असुरः तं हतवानित्यर्थे क्विबन्तनिष्पन्नात् वृत्रहन् शब्दात् सौ 'वृत्रहन् सु' इति स्थिते वृत्रहन् शब्दे 'हन्' इत्यस्यापि 'इनहन् पूषार्यम्णां शौ' इति शावेव दीर्घं इति नियमात् सौ परतः 'सर्वनामस्थाने—' इति दीर्घे अप्राप्ते 'सौ च' इत्यनेन दीर्घे हल्ङ्यादिना सुलोपे नलोपे 'वृत्रहा' इति।

वृत्रघ्नः ( ई. ३७ )—वृत्रो नाम असुरः तं हतवानित्यर्थे क्विबन्तनिष्पन्नात् वृत्रहन् शब्दाच्छसि भसंज्ञायाम् 'अल्लोपो नः' इत्यल्लोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हकारस्य कुत्वेनान्तरतम्यात् घकारादेशे सस्य रुत्वे विसर्गे 'वृत्रघ्नः' इति।

नन्वत्र कृतेप्यल्लोपे तस्य पूर्वस्माद्विधौ स्थानिवत्त्वादुत्तरपदस्य एकाच्त्वात् 'एकाजुत्तरपदे णः' इत्यनेन, स्थानिवत्त्वाऽभावेऽपि 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन, 'कुमति च' इत्यनेन वा णत्वं कुतो नेति चेन्न, 'अत्पूर्वस्य' इति ह्रस्वाकारपूर्वकस्यैव हन्तेर्नस्य णत्वनियमादत्र नकारस्य अकारपूर्वकत्वाऽभावात् णत्वाऽप्रवृत्तेः। न च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन 'अत्पूर्वस्ये'ति सूत्रं 'हन्तेः इत्यस्यैव नियामकं न तु 'एकाजुत्तरपदे णः' इत्यादेरिति वाच्यम्, तथा सति 'हन्तेरत्पूर्वस्य' इत्येकयोगेनैव 'हन्तेः' इत्यस्य अत्पूर्वेतरत्र निवृत्तौ सिद्धायां योगविभागस्य वैयर्थ्येन तत्सामर्थ्यादत्र उक्तन्यायाऽप्रवृत्तेर्बोधनेन विप्रकृष्टस्यापि 'एकाजुत्तरपदे णः' 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यादेस्तेन नियमादप्रवृत्तेः।

वृत्रघ्नः ( ४३, ४५, ४९, ५२ )—वृत्रहन् शब्दाच्छसि भसंज्ञायामल्लोपे च नकारे परे कुत्वविधानसामर्थ्यादल्लोपस्य स्थानिवत्वाभावे 'हो हन्तेरि'ति कुत्वे योगविभागसामर्थ्यादनन्तरस्येति न्यायं बाधित्वाऽत्पूर्वस्येत्यनेन सवर्णत्वनियमेन णत्वाप्राप्त्या वृत्रघ्न इति सिद्धम्। 'कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः' इति वार्त्तिकभाष्यविरोधेन माधवोक्तं वैकल्पिकणत्वं नारदरणीयमिति।

कुव्यवाये (ई. ३७)—'वृत्रघ्न' इत्यादि प्रयोगेषु णत्ववारणाय 'कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः' इति वार्तिककारेण वार्तिकं पठितम्। भाष्यकारस्तु वृत्रघ्न सुघ्नः, प्राघानि एषु प्रयोगेषु णत्ववारणाय 'अत्पूर्वस्य' इति योगविभागस्य, अकारपूर्वस्यैव हन्तेर्णत्वम्भवतीत्यर्थं कृत्वा वार्त्तिकं प्रत्याचख्यौ। एवञ्च महर्षिद्वयविरोधात् माधवकथितं वैकल्पिकणत्वमन्याय्यमिति।

**मघवान (ई. ३७)**—'मघवन्' शब्दात् सौ 'मघवा बहुलम्' इति 'तृ' इत्यन्तादेशे अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि अनुबन्धलोपे हल्ङ्यादिलोपे 'संयोगान्तस्य लोपः' इति सलोपे 'मघवा बहुलम्' इति सूत्रस्थ-बहुलग्रहणात् संयोगान्तलोपस्याऽसिद्धत्वाभावेन 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति नान्तस्योपधाया दीर्घे 'मघवान्' इति । तृत्वाऽभावे तु हल्ङ्यादिलोपे नान्तस्योप-धाया दीर्घे नलोपे 'मघवा' इति ।

**मघवा बहुलम (ई. ३६)**—अयं भावः—मघवन् शब्दात् सौ 'मघवा बहुलम्' इति त्रन्तादेशे 'उगिदचामि'ति नुमि सुलोपे संयोगान्तलोपे उपधादीर्घे 'मघवान्' इति । न चात्र दीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वं कुतो नेति वाच्यम्, 'मघवा बहुलम्' इति सूत्रस्थबहुलग्रहणेन दीर्घे कर्तव्ये संयोगान्तलोप-स्याऽसिद्धत्वाभावकल्पनेनादोषात् । तथाहि—मह्यते = पूज्यते इत्यर्थे मह्धातोः 'श्वन्नुक्षन्नि'त्युणादिसूत्रेण निपातनात् कनिप्रत्यये वुगागमे हस्य घत्वे 'मघवन्' इति तस्मात् सौ दीर्घे सुलोपे नलोपे 'मघवा' इति । अथ च मघः = धनम् अस्यास्ती-त्यर्थे मघशब्दात् मतुपि 'मादुपधायाश्चे'ति वत्वे 'मघवत्' इति, तस्मात् सौ उगि-त्वान्नुमि दीर्घे सुलोपे संयोगान्तलोपे 'मघवान्' इति च संसाध्य 'मघवा बहुलम्' इति सूत्रं प्रत्याख्यातमाकरे । उक्तार्थे बहुलग्रहणस्य ज्ञापकत्वाऽभावे 'मघवन्, मघवा' इत्यनयोरेव सिद्धिः स्यात्, न तु 'मघवान्' इत्यस्येति । तस्मादारम्भप्रत्या-ख्यानयोः फलैक्याय बहुलग्रहणमुक्तार्थे ज्ञापकमिति तत्त्वविदः । अत एव 'हविर्ज-क्षिति निश्शङ्को मखेषु मघवानसौ' इति भट्टिकाव्ये 'मघवान्' इत्युक्तिः सङ्गता ।

**मघवान् (ई. ४७, ५२, ५६, ६१)**—मघवन्शब्दात्सौ मघवा बहुलमिति त्रन्तादेशे उगिदचामिति नुमि सुलोपे संयोगान्तलोपे प्रत्ययलक्षणेन सर्वनामस्थान इति दीर्घे मघवानिति; पक्षे मघवेति । अत्र दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्ध-त्वन्तु न शङ्क्यम्; भाष्ये श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्य; मघवाबहुलमिति सूत्रं प्रत्याख्यातम् । सूत्रारम्भप्रत्याख्यानयोः फलैक्याय बहुलग्रहणेन सिद्धत्वाभावकल्पनात् । अत एव मघवानसौ मघवान्नृजी-षीत्यादि प्रयोगाः सङ्गच्छन्ते ।

**मघवा**—'श्वन्नुक्षन्' इति सूत्रेण मह् धातोः कनि प्रत्यये हकारस्य घकारे अवुगागमे च कृते मघवा इति रूपं सिध्यति । मघशब्दान्मतुपि 'अत्वसन्तस्य

चाधातोः' इति दीर्घे नुमादिकार्ये च कृते मघवानिति रूपं सिद्धम्भवति । एवंच रूपद्वयसिद्धौ 'मघवा बहुलम्' इति सूत्रं प्रत्याख्यातमाकरे । तथा चारम्भप्रत्याख्यानयोः फलैक्याय बहुलग्रहणेन दीर्घे कर्तव्ये संयोगान्तलोपो नासिद्ध इत्येव कल्पना कार्या । बहुलग्रहणसामर्थ्येन नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वन्न भवतीति कल्पना यदि स्यात्, तदा प्रत्याख्यानपक्षे मघवानिति रूपम्भवति, सूत्रारम्भे तु मघव इति रूपम्भवतीति फलभेदः समापतीति मूलोक्तमेव युक्तमिति भावः ।

मघोनः (ई. ४२, ४४)—मह्यते=पूज्यते इति मघवान्=इन्द्रः । 'श्वन्नुक्षन्'–स्यादिसूत्रेण निपातनात् मह्धातोः कनिप्रत्यये अवुगागमे हस्य घत्वे च कृते 'मघवन्' शब्दो निष्पन्नो भवति । तस्य 'मघवा बहुलम्' इति तृत्वभावे द्वितीया-बहुवचने, पञ्चम्येकवचने च 'मघोनः' इति भवति । तत्र हि 'मघवन् अस' इति स्थिते 'यचि भम्' इत्यनेन भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इत्यनेन सम्प्रसारणे पूर्वरूपे च कृते 'आद्गुणः' इत्यनेन गुणे सकारस्य रुत्वे विसर्गे 'मघोनः इति सिद्धम् ।

यूनः (ई. ४३, ६०)—युवन् शब्दात् शसि भसंज्ञायाम् 'श्वयुवमघोनामतद्धिते' इत्यनेन वकारस्य सम्प्रसारणे 'यु उ अन् अस' इति स्थिते 'सम्प्रसारणाच्च' इत्यनेन पूर्वरूपे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'यूनः' इति सिद्धम् ।

नचात्र यकास्य सम्प्रसारणं कुतो नेति वाच्यम् ? सवर्णदीर्घनिष्पन्नस्य ऊकारस्य 'अचः परस्मिन्' इति स्थानिवत्वेन सम्प्रसारणतया 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात् । ननु स्थानिवत्वेऽपि प्रथमेन उकारेण व्यवधानात् सम्प्रसारणपरत्वाभावात् कथमत्र निषेधः स्यादिति चेन्न, 'न सम्प्रसारणे सम्प्रसारणम्' इति सूत्रस्य 'यूनस्तिः' इति सूत्रस्य च वैयर्थ्यापत्तेः । नच तर्हि प्रथमं यकारस्य सम्प्रसारणमस्तु, तदुत्तरं वकारस्याऽपीति वाच्यम् ? तदपि 'न सम्प्रसारणे' इति निषेधस्यैव वैयर्थ्यापत्तेरिति दिक् ।

अर्वतः ( ई. ५३ )—अर्वन् शब्दात् शसि 'अर्वणस्त्रसावनञः' इति सूत्रेण 'अलोन्त्यस्ये'ति सहकारात् नस्य 'तृ' इत्यादेशे अनुबन्धलोपे सस्य रुत्वे विसर्गे 'अर्वतः' इति । असर्वनामस्थानत्वान्नुम्नेति ।

'मघवन्' शब्दस्य रूपाणि ( ई. ३३ )—

तृत्वपक्षे—

| | | |
|---|---|---|
| मघवान् | मघवन्तौ | मघवन्तः |
| मघवन्तम् | मघवन्तौ | मघवतः |
| मघवता | मघवद्भ्याम् | मघवद्भिः |
| मघवते | मघवद्भ्याम् | मघवद्भ्यः |
| मघवतः | मघवद्भ्याम् | मघवद्भ्यः |
| मघवतः | मघवतोः | मघवताम् |
| मघवति | मघवतोः | मघवत्सु |

तृत्वाऽभावपक्षे—

| | | |
|---|---|---|
| मघवा | मघवानौ | मघवानः |
| मघवानम् | मघवानौ | मघोनः |
| मघोना | मघवभ्याम् | मघवभिः |
| मघोने | मघवभ्याम् | मघवभ्यः |
| मघोनः | मघवभ्याम् | मघवभ्यः |
| मघोनः | मघोनोः | मघोनाम् |
| मघोनि | मघोनोः | मघवसु |
| हे मघवन् | हे मघवानौ | हे मघवानः |

पन्थाः ( ई. ४० )—'पथिन्' शब्दात् सौ 'पथिमथ्यृभुक्षामात्' इति आत्वे 'इतोत्सर्वनामस्थाने' इति थकारोत्तरवर्तिनः इकारस्य अकारे 'थो न्थः' इति थकारस्य 'न्थादेशे' 'अकः सवर्णे दीर्घः' इति दीर्घे सस्य रुत्वे विसर्गे 'पन्थाः' इति ।

सुपथि—शोभनः सन्था यस्य वनस्येति बहुव्रीहौ सुपथिन्-शब्दात् सौ सोर्लुकि नलोपे च कृते 'सुपथि' इति । प्रत्ययलक्षणेन सुप्त्वात् 'पथिमथि—' इत्यात्वन्तु न 'न लुमते'ति प्रत्ययलक्षणनिषेधात् ।

सुपन्थानि ( ई. ३६ )—शोभनः पन्थाः अस्य वनस्येति सुपथिन् शब्दात् शसि 'जश्शसोः शिः' इत्यनेन श्यादेशे 'शि सर्वनामस्थानम्' इत्यनेन सर्वनामस्थान-संज्ञायाम् 'इतोऽत्सर्वनामस्थाने' इत्यनेनात्वे 'थो न्थः' इति थस्य न्थादेशे 'सर्वनाम-स्थाने चाऽसम्बुद्धौ' इति दीर्घे उक्तं रूपं सिद्धम् ।

शतानि ( ई. ३४ )—शतशब्दाज्जसि शसि वा जश्शसोः स्थाने श्यादेशे नुमि 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे उक्तं रूपं सिद्धम्। नच 'नपुंसकस्य झलचः' इति नुमि सति 'शतम् इ' इति स्थिते 'ष्णान्ता षट्' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जश्शसोर्लुक् कुतो नेति वाच्यम्, सन्निपातपरिभाषाविरोधात्। सर्वनामस्थानसन्निपातेन विहितस्य नुमः षट्त्वसम्पादनद्वारा तदविघातकत्वादिति भावः।

अष्टौ ( ई. ४३ )—'अष्टन्' शब्दात् जसि शसि च विभक्तौ अनुबन्धलोपे 'अष्टन् अस' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन अष्टनो नकारस्य आत्वे 'अष्ट आ अस' इति स्थिते 'सवर्णदीर्घे' 'अष्टाभ्य औश्' इत्यनेन औशि अनुबन्धलोपे 'वृद्धिरेचि' इति वृद्धौ 'अष्टौ' इति सिद्धम्। ननु हलादावात्वस्य विधानेन कथमत्र अजादावात्वमिति चेन्न, एकमात्रालाघवेन 'अष्टभ्य औस्' इति वक्तव्ये 'अष्टाभ्यः' इति दीर्घोच्चारणं क्वचिदजादावपि 'अष्टन आ विभक्तौ' इति सूत्रविहितमात्वं भवतीति ज्ञापनेनादोषात्।

अष्टानाम् ( ई ३२ ) 'अष्टन्' शब्दात् षष्ठीबहुवचने 'ष्णान्ता षट्' इत्यनेन षट्संज्ञायां 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'अष्टन् नाम्' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन पाक्षिके आत्वे 'अष्ट आ नाम्' इति दशायाम् 'अकः सवर्णे दीर्घः' इति दीर्घे 'अष्टानाम्' इति। आत्वाऽभावेऽपि 'अष्टानाम्' इति। तद्धि षट्संज्ञायां सत्यां नुटि अनुबन्धलोपे 'नोपधायाः' इति दीर्घे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'अष्टानाम्' इति भवति।

अष्टौ ( ई. ५७, ६१)—अष्टन् शब्दात् जसि शसि च विभक्तौ 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणेन आत्वस्य वैकल्पिकत्वबोधानात् अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशेन जश्शसोर्विषयेऽपि आत्वज्ञापनात् आत्वे 'अष्टाभ्य औश्' इति औशादेशे वृद्धौ उक्तं रूपं सिद्धम्।

अष्टभ्य इति—अयम्भावः—एकमात्रालाघवेन 'अष्टभ्यः' इत्येव वक्तव्ये 'अष्टाभ्य' इति दीर्घोच्चारणं क्वचिदजादावपि 'अष्टन आ विभक्तौ' इति सूत्रविहितमात्वम्भवतीति ज्ञापयति। तेन जश्शसोरपि विषये आत्वं सिध्यति, 'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणेन 'अष्टन आ' इति विहितमात्वं विकल्पेन भवतीत्यपि सिद्धम्। अन्यथा सर्वत्रैव दीर्घाकारस्यैव सम्भवात्तत्सूत्रे दीर्घग्रहणं व्यर्थमेव स्यादिति।

प्रियाष्टनः ( ई. ४४, ४६, ५२, ५६ )—प्रिया अष्टौ येषामिति विग्रहे समासात् 'प्रियाष्टन्' शब्दात् शसि भसंज्ञायाम् अल्लोपे सस्य रुत्वे विसर्गे 'प्रियाष्टनः' इति। अत्र पञ्चमीसमासपक्षे अल्लोपस्य स्थानिवत्वात् न ष्टुत्वम्। 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधस्तु न, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति निषेधात्। पञ्चमीसमासस्य अनित्यत्वपक्षे तु कार्यकालपक्षे त्रिपाद्यामप्यन्तरङ्गपरिभाषायाः प्राचीनमते प्रवृत्तिस्वीकारेण तयाऽसिद्धतया न ष्टुत्वमिति दिक्।

इह पूर्वस्मादपीति—अयम्भावः–प्रियाष्टन् शब्दात् शसि भसंज्ञायाम् 'अल्लोपो नः' इत्यनेन अकारलोपे सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम्।

नचात्र अल्लोपे कृते 'ष्टुना ष्टुः' इत्यनेन टकारयोगे नकारस्य ष्टुत्वेन णकारापत्तिः कुतो नेति वाच्यम्—'अचः परस्मिन्' इत्यनेन अल्लोपस्य स्थानिभूतलुप्ताकारापेक्षया पूर्वत्वेन दृष्टाट्टकारात्परस्य णत्वे कर्तव्ये स्थानिवद्भावेन टकारयोगाभावेन ष्टुत्वाप्रवृत्तेः। नच 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधः स्यादिति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति णत्वे कर्तव्ये तन्निषेधात्। यदि तु लक्षणप्रतिपदोक्तपरिभाषया णत्वपदेन न ष्टुत्वनिष्पन्नणत्वस्य ग्रहणमित्युच्यते तर्हि 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया भसंज्ञाद्वारा बाह्यशस्प्रत्ययनिमित्तकाऽल्लोपस्य बहिरङ्गत्वेनान्तर्भूतटकारयोगनिमित्तकत्वेनान्तरङ्गष्टुत्वदृष्ट्याऽसिद्धत्वात्। यथोद्देशपक्षेण 'राज्ञः' इत्यादाविव असिद्धपरिभाषायास्त्रैपादिकेऽप्रवृत्तिरिति दूषणं तु न युक्तम्, एकपक्षेणेष्टसिद्धौ पक्षान्तरेण दूषणदानस्यानुचितत्वात्।

युङ् ( ई. ३९ )—'युजिर् योगे' अस्माद्धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इत्यनेन क्विनि 'लशक्वतद्धिते' इति ककारस्य 'हलन्त्यम्' इति नकारस्य, च इत्संज्ञायाम् 'अपृक्त एकाल् प्रत्ययः' इत्यनेन अपृक्तसंज्ञायां सत्यां 'वेरपृक्तस्य' इत्यनेन वकारस्य च इत्संज्ञायां लोपे च विहिते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते प्रत्ययलक्षणेन 'कृदतिङ्' इति कृत्संज्ञायां 'कृत्तद्धितसमासाश्चेति' कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'युजेरसमासे' इति नुमि अनुबन्धलोपे हल्ङ्यादिना सलोपे 'संयोगान्तस्य लोपः' इति जलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे 'युङ्' इति सिद्धम्।

विश्वाराट् ( ई. ३४ )—विश्वोपपदात् राज्धातोः 'सत्सुद्विषु' इति क्विपि क्विपः सर्वापहारे 'विश्वराज्' इति, तस्मात् कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनु-

बन्धलोपे 'विश्वराज् स्' इति दशायां 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन जकारस्य षत्वे 'झलां जशोऽन्ते' इत्यनेन षकारस्य जश्त्वेन डकारे 'वाऽवसाने' इति डस्य चर्त्वे 'विश्वस्य वसुराटोः' इति विश्वशब्दस्य दीर्घे 'हल्ङ्यादिना सलोपे 'विश्वाराट्' इति । चर्त्वाऽभावपक्षे 'विश्वाराड्' इति ।

युक् ( ई. ५१ )—युज्यते समाधत्ते इति युक् । युज समाधौ इति दैवादिकात् युज्धातोः 'क्विप् च' इति क्विपि क्विपः सर्वापहारे सौ हल्ङ्यादिना सोलोपे कुत्वे 'युक्' इति । 'ऋत्विग्—' सूत्रे 'युजेरसमासे' इति सूत्रे च व्याख्यानात् 'युजिर्योगे' इति धातुपाठपठितस्य रकारविशिष्टस्यैव ग्रहणादत्र नुम्नेति तत्त्वविदः ।

ऋत्विक् ( ई. ३१ )—ऋतावुपपदे 'यज्' धातोः 'ऋत्विग्दधृक्' इत्यादिना क्विनि 'लशक्वतद्धिते' इत्यनेन ककारस्य 'हलन्त्यम्' इत्यनेन नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते क्विनो वकारस्य 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञायां 'वेरपृक्तस्य' इत्यपृक्तसंज्ञकस्य वस्य च लोपे विहिते क्विनः सर्वाऽपहारे 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'ऋतु इज्' इति स्थिते 'इको यणचि' इति यणि 'ऋत्विज्' इति स्थिते 'कृदतिङ्' इति सूत्रेण कृत्सञ्ज्ञायां 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'ऋत्विज् स्' इति स्थित हल्ङ्यादिना सलोपे 'क्विन्प्रत्ययस्य कुः' इत्यनेन जकारस्य कुत्वेन गकारे 'वाऽवसाने' इति तस्य चर्त्वेन ककारे 'ऋत्विक्' इति । चर्त्वाऽभावपक्षे 'ऋत्विग्' इति ।

द्विपर्यन्तानामित्येव । अयम्भावः—'तदोः सः सावनन्त्ययोः' इति सूत्रे त्यदादीनां द्विपर्यन्त एव गृह्यते इति युष्मद्शब्दस्य त्यदादिबहिर्भूतत्वेन त्वमित्यत्र तकारस्य सत्वं न भवति ।

न च 'त्वाहौ सौ' इति सूत्रे तकारोच्चारणसामर्थ्यादेवात्र सत्वं न स्यादिति वाच्यम् । अतित्वमित्यत्र गौणे तकारोच्चारणस्य सफलत्वात् । तत्र चात्वसत्वे न भवतः, यतः सर्वेषां नामवाचकः सर्वनामेत्यन्वर्थसंज्ञाबलेन यत्र सर्वादीनां प्राधान्यं स्यात्तत्रैव सर्वनामसंज्ञा भवति । गौणे च सर्वादीनां प्रधानता न विद्यते इति सर्वनामसंज्ञा न भवति । एवञ्च सर्वनामसंज्ञानिमित्तकं सर्वाद्यन्तर्गणकार्यञ्च प्रधानतायामेव न तु गौणे ।

**त्वं स्त्री**—ननु त्वं स्त्रीत्यत्र 'त्वाहौ सौ' इति त्वादेशे 'शेषे लोपः' इति लोपे 'ङे प्रथमयोरम्' इत्यमादेशे च त्व अम्, अह अम् इति दशायाम् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया परमपि अमि पूर्वरूपं बाधित्वा टाप् स्यादिति चेन्न, 'अलिङ्गे युष्मदस्मदी' इति वचनेन तयोः स्त्रीत्वाभावात्। 'शेषे लोपः' इति सूत्रे शेषे इति षष्ठ्यर्थे सप्तमी ततश्च शेषस्य 'अद' इत्यस्य लोप इत्यर्थे त्व अद् इति स्थिते 'अतो गुणे' इति पररूपे कृते परादिवद्भावेन अद्भागमादाय तस्याद्भागस्य लोपेऽदन्तत्वाभावादेव न टाप् स्यादित्यपि बोध्यम्।

**मपर्यन्तस्य किम (ई. ५०)**—अयम्भावः-ओकारसकारभकारादौ सुपि सर्वनाम्नः टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्रागकच्' इति वार्तिकेन पूर्वं युवामिति संसाध्य आमः पूर्वम् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्रेणाकजादेशे युवकामित्यत्र दोषाभावेन त्व्या म्येति दूषणं दत्तम् 'योऽचि' इति सूत्रस्थाने 'अच्ये' इति न्यासेन अजादिविभक्तौ एत्वं स्यादित्यर्थेऽलोऽन्त्यपरिभाषया त्वादेशोत्तरम् अकारस्य एत्वे अयादेशे च कृते त्वयेति रूपसिद्धौ युवकाभ्यामियत्यत्र दूषणं बोध्यम्।

**आवाम (ई. ३०)**—अस्मच्छब्दात् प्रथमाद्विवचने 'अस्मद् औ' इति स्थिते 'ङे प्रथमयोरम्' इत्यनेन औकारस्य स्थाने अमि 'युवावौ द्विवचने' इति अस्मदो मपर्यन्तस्य आवादेशे 'आव अद् अम्' इति स्थिते 'अतो गुणे' इति पररूपे 'आवद् अम्' इति दशायां 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यनेन दकारस्यात्वे' आव आ अम्' इति जाते 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे 'आवा अम्' इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे 'आवाम्' इति सिद्धम्।

**यूयम् (ई. ४५)**—युष्मद्शब्दाज्जसि 'ङे प्रथमयोरम्' इत्यमादेशे 'यूयवयौ जसि' इति यूयादेशे 'शेषे लोपः' इत्यन्तलोपे 'अमि पूर्वः' इति पूर्वरूपे उक्तं रूपं सिद्धम्। नन्वत्र 'यूय अम्' इति स्थिते अमादेशस्य 'स्थानिवदादेशोऽनल्विधौ' इत्यनेन स्थानिवद्भावाज्जस्त्वारोपेण अदन्तसर्वनाम्नः परतया 'जसः शी' इत्यनेन श्यादेशः कुतो नेति चेदुच्यते—'अङ्गवृत्ते पुनर्वृत्तावविधिः' अङ्गकार्ये कृते पुनः द्वितीयमङ्गकार्यं न भवतीत्यर्थिकया परिभाषया यूयादेशस्याऽङ्गकार्यस्य प्रवृत्त्यनन्तरं श्यादेशप्रवृत्तेर्निषेधात्।

**अङ्गकार्येति**—नच युष्मद्—शब्दात् जसि 'ङे. प्रथमयोरम्' इति जसोऽमादेशे 'यूयवयो जसि' इति यूयादेशे 'शेषे लोपः' इत्यन्तलोपे स्थानिवत्त्वेनामो 'जसः शी' इति श्यादेशः कथन्नेति वाच्यम्, अङ्गकार्यं कृते पुनर्नाङ्गकार्यम्' इति परिभाषया वारणसम्भवात्। ननु द्वयोरित्यादिनिर्देशेन अस्या अनित्यत्वात् श्यादेशो दुर्वार इति चेन्न, 'ङे, प्रथमयोरम्' इत्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते नतु विक्रियते इति व्याख्यानेनादोषात्।

**अतिवयम्** ( ई. ४९ )--'मामतिक्रान्तः' इति विग्रहे रूपमिदम्। साधनप्रकारस्तु 'समस्यमाने' इत्यस्य व्याख्यानावसरे द्रष्टव्यम्।

**युष्मान्** ( ई. ३१ )—युष्मच्छब्दाच्छसि 'युष्मद् अस्' इति स्थिते 'द्वितीययां च' इत्यनेन अन्त्यस्य दमात्रस्य आकारे सवर्णदीर्घे 'शसो नः' इत्यनेन 'आदेःपरस्ये'ति सहकाराच्छसोऽकारस्य नादेशे 'संयोगान्तस्ये'ति सलोपे 'युष्मान्' इति।

**अस्माभिः**—'अस्मद्' शब्दात् भिसि 'युष्मदस्मदोरनादेशे' इति अस्मदोऽन्त्यस्य नस्य आत्वे 'अकः सवर्णे दीर्घः' इति दीर्घे सस्य रुत्वे विसर्गे 'अस्माभिः' इति सिद्धम्।

**युष्मभ्यम्** ( ई. ३४ )—युष्मच्छब्दात् चतुर्थ्याः पञ्चम्या वा बहुवचने 'युष्मद् भ्यस्' इति स्थिते 'भ्यसो भ्यम्' इति भ्यसो भ्यमादेशे 'शेषे लोपः' इत्यन्तलोपे 'युष्मभ्यम्' इति सिद्धम्। न चात्र दकारलोपे सति 'बहुवचने झल्येत्' इति एत्वं कुतो नेति वाच्यम्, 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति निषेधात्। ( अङ्गे वृत्तं=वर्तनं यस्य तदङ्गवृत्तं, तस्मिन् कार्ये प्रवृत्ते सति अन्यस्याङ्गकार्यस्य प्रवृत्तौ=प्रवृत्तिविषवे अविधिः=विधिर्नास्तीति तदर्थः। )

यद्वा—'भ्यसो भ्यम्' इत्यत्र 'भ्यसोऽभ्यम्' इति छेदपक्षे भ्यसोऽभ्यमादेशे 'शेषे लोपः' इति टिलोपे उक्तं रूपं ज्ञेयम्। अन्त्यलोपपक्षे तु 'अतो गुणे' इति पररूपेण निष्पन्नं बोध्यम्।

**मत्** ( ई. ४६ )—अस्मद्-शब्दात् पञ्चम्येकवचने 'अस्मद् अस्' इति स्थिते 'त्वमावेकवचने' इत्यनेन मादेशे 'एकवचनस्य च' इत्यनेन ङसेरदादेशे 'म अद् अत्' इति स्थिते पूर्वाकारस्य पररूपे 'शेषे लोपः' इत्यनेन टिलोपे उक्तं रूपं सिद्धम्। अन्त्यलोपपक्षे तु त्रयाणामकाराणां पर्यायेण पररूपं बोध्यम्।

युष्मत् ( ई. ३२ )—'युष्मद्' शब्दात् भ्यसि 'पञ्चम्या अत्' इति भ्यसो अदादेशे 'शेषे लोपः' इति युष्मदोऽन्त्यस्य दस्य लोपे 'अतो गुणे' इति पररूपे उक्तं रूपं सिद्धम् ।

युष्माकम् ( ई. ५२, ५६, ५७ )—'युष्मद्' शब्दादामि 'युष्मद् आम्' इति स्थिते 'साम आकम्' इति आमि सामुत्वारोपेण आकमादेशे 'युष्मद् आकम्' इति स्थिते 'शेषे लोपः' इति अन्त्यस्य दस्य लोपे सवर्णदीर्घे 'युष्माकम्' इति सिद्धम् ।

ननु 'युष्मद् आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति अदन्तात् परस्यामो विधीयमानस्य सुटः प्रसक्तिरेव नास्ति, न च 'शेषे लोपः' इति अन्त्यस्य दस्य लोपे कृते अदन्तात् परत्वामोऽस्तीति वाच्यम्, आकमादेशात् प्राग् अनादेशतया 'योऽचि' इति सूत्रस्य प्राप्तया 'शेषे लोपः' इत्यस्याऽप्रसक्तेः । तथा च ससुट्कनिर्देशो व्यर्थः सूत्राऽसङ्गतिश्चेति चेन्न, आकमि कृते 'शेषे लोपः' इति लोपे सति प्राप्तस्य सुटो निवृत्त्यर्थं ससुट्कनिर्देशस्यावश्यकत्वात् ।

समस्यमाने ( ई. ३५, ४३, ४७, ४८, ५१, ५२, ५५, ५७, ६० )—अयम्भावः—'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रे द्विवचनैकवचनयोरर्थपरत्वव्याख्याने फलं दर्शयति—समस्यमाने द्वेकत्वेत्यादिना ।

तथा च—यत्र समासे लौकिकविग्रहवाक्ये युष्मदस्मद्शब्दौ द्वित्वस्य वाचकौ स्तः तत्र सु जस् ङे ङस् इति चतस्रः विभक्तीः विहाय सर्वत्रैव युवावौ स्याताम् ।

यत्र च लौकिकविग्रहवाक्ये युष्मदस्मद्शब्दो एकत्वरूपार्थस्य वाचकौ स्तः, तत्र पूर्ववत्सर्वत्र त्वमौ स्याताम् । अथ च यत्र समासे युष्मदस्मद्शब्दौ बहुत्वरूपार्थस्य वाचकौ तत्र युवावौ त्वमौ च न स्तः ।

इत्थञ्च त्वां मां वाऽतिक्रान्तः इति विग्रहे सर्वत्र त्वमौ भविष्यतः । युवामावां वाऽतिक्रान्तः इति विग्रहे सर्वत्र युवावौ भविष्यतः । युष्मान् अस्मान् वाऽतिक्रान्तः इति विग्रहे च युवावौ त्वमौ च न भविष्यतः । द्विवचनैकवचनयोः प्रत्ययपरत्वे तु समस्तपदादेकवचने त्वमौ स्याताम् । द्विवचने च युवावौ स्यातामिति रूपेषु महान् भेदो भविष्यति । तस्मादर्थपरत्वमेव न्याय्यम् ।

श्रीशस्त्वावतु०—इह = संसारे, श्रीशः = नारायणः, त्वा = त्वाम्, मा = माम्, अपि = च, अवतु = पातु । स हरिः = पूर्वोक्तः नारायणः, ते तुभ्यम्,

मे = मह्यम् , अपि = च, शर्म = सुखम् , दत्तात् = ददातु । स हरिः = पूर्वोक्तः नारायणः, ते = तव, मे = मम, अपि = च, स्वामी = प्रभुः, अस्तीति शेषः । ( सः ) विभुः = व्यापको नारायणः, वाम् = युवाम् , नौ = आवाम् , पातु = रक्षतु । ( सः ) ईशः = प्रभुः, वाम् = युवाभ्याम् , नौ = आवाभ्याम् , सुखं = कल्याणम् ददातु = दत्तात् । ( सः ) हरिः = नारायणः, वां = युवयोः, नौ = आवयोः, पतिः = प्रभुः, अस्तीति शेषः । सः = हरिः, वः = युष्मान् , नः = अष्मान् , अव्यात् = रक्षेत् । सः = हरिः, वः = युष्मभ्यम् , नः = अस्मभ्यम् , शिवं = कल्याणं, दद्यात् । अत्र = इह लोके, सः = हरिः, वः = युष्माकम् , नः = अस्माकम् , सेव्यः = आराध्यः, अस्तीति शेषः ।

देवाऽस्मान् पाहि ( ई. ४३ )—अत्र 'सामन्त्रितम्' इत्यनेन सम्बोधनबहुवचनान्तस्य 'देवा' इत्यस्य आमन्त्रितसंज्ञायाम् 'आमन्त्रितं पूर्वमविद्यमानवत्' इति तस्याऽविद्यमान्वद्भावे 'अस्मान्' इत्यत्र 'बहुवचनस्य वस्नसौ' इति अस्मदो नसादेशो न भवति । अस्मानित्यस्य पदात्परत्वाऽभावात् , पदादौ स्थितत्वाच्चेति ।

प्राचः ( ई. ५२ )—प्रपूर्वात् अच् धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चयुजिकुञ्चां च' इति सूत्रेण क्विपि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते 'वेरपृक्तस्य' इति वकारस्याऽपि लोपे कृते क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारलोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'प्र अच्' इत्यस्य 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'प्र अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यनेनाकारस्य लोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्राचा' इति सिद्धम् ।

प्रतीचः ( ई. ३९ )—प्रतिपूर्वाद् 'अच्' धातोः 'ऋत्विगि'त्यादिना क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य चेत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते 'वेरपृक्तस्य' इति वकारस्यापि लोपे क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृतसंज्ञकत्वात् 'प्रति अच्' इत्यस्य 'कृत्तद्धि प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'प्रति अच अस' इति स्थिते 'यचि भम्'

इति भसंज्ञायाम् 'अचः' इत्यलोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्रतीचः' इति सिद्धम् ।

**अतित्वाम्** (ई. ३७)—'त्वमावेकवचने' इति सूत्रे एकवचनशब्दस्य अर्थपरत्वेन त्वामतिक्रान्तः इति विग्रहे समासे सति अतियुष्मच्छब्दस्य षष्ठीबहुवचने 'त्वमावेकवचने' इत्यनेन त्वमादेशे 'शेषे लोपः' इत्यनेन टिलोपे सवर्णदीर्घे उक्तं रूपं सिद्धम् ।

**अतिमाम्** (ई. ३५)—मामतिक्रान्तौ इति विग्रहे समासनिष्पन्नादत्यस्मच्छब्दात् औ विभक्तौ 'अत्यस्मद् औ' इति स्थिते अस्मच्छब्दस्यैकत्वसंख्याभिधायित्वेऽपि पूर्वविप्रतिषेधात् मादेशे 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यनेनाकारे औविभक्तेरमादेशे 'अमि पूर्वः' इति पूर्वरूपे उक्तं रूपं सिद्धम् ।

**अतियुवया** (ई. ३८)—युवामतिक्रान्त इति विग्रहे निष्पन्नादतियुष्मच्छब्दात् तृतीयैकवचने 'अतियुष्मद् आ' इति स्थिते अत्वे पररूपे युवादेशे 'योऽचि' इत्यनेन एकारादेशे उक्तं रूपं सिद्धम् । ( विस्तरस्तु 'समस्थाने' इत्यस्य व्याख्यावसरे द्रष्टव्यः । )

**अतित्वाकम** (ई. ४३,४८,५१)—त्वामतिक्रान्तः इति विग्रहे निष्पन्नादतियुष्मच्छब्दादामि 'अतियुष्मद् आम्' इति स्थिते 'त्वमावेकवचने' इत्यनेन मपर्यन्तस्य त्वादेशे 'शेषे लोपः' इति टिलोपे 'साम आकम्' इत्याकमादेशे सवर्णदीर्घे 'अतित्वाकम्' इति सिद्धम् । नन्विह अतियुष्मच्छब्दघटक'युष्मत्'शब्दस्य उपसर्जनत्वेन सर्वादित्वविरहात् तदन्तस्य सर्वनामत्वाभावेन, सर्वनाम्नो विहितस्यैवाऽऽमः सुटो विधानात् प्रकृतेः सुट्सम्भावनाया अपि नितरामनुपलम्भात् कथं 'साम आकम्' इति सूत्रप्रवृत्तिरिति चेन्न, 'अतित्वाकम्' इत्यस्य भाष्यकृता प्रदर्शितत्वेन यत्र सुट्सम्भविता तदर्थं ससुट्कनिर्देशः, यत्र च न भविता तत्र च केवलस्यामः आकमादेशस्य ससुट्कनिर्देशेन कल्पनादिति ।

**अग्ने तव** (ई. ४०)—अत्र 'सामन्त्रितम्' इति सूत्रेण आमन्त्रितसंज्ञायाम् 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यनेन 'अग्ने' इत्यस्य अविद्यमानवद्भावे 'तव' इत्यस्य पदात्परत्वाभावात् पदादौ स्थितत्वाच्च 'ते' आदेशो नेति विशेषः ।

**युष्मानतिक्रान्तः इति** (ई. ४६)—द्वेकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्वेकतार्थत्वान्न युवावौ त्वमौ च न ।' इति चतुर्थश्लोकस्योदाहरण-

मेतत्। अत्र श्लोके यदा इत्यध्याहार्यम्। तथा च—यदा युष्मान् अस्मान् वा अतिक्रान्तौ अतिक्रान्ता वेति विग्रहे समासे सति द्वित्वैकत्वविशिष्टसमासार्थः समासस्य मुख्यविशेष्यभूतः, युष्मद् अस्मदी तु बह्वर्थकः, तदा युवावौ त्वमौ च न स्तः, तयोः युष्मदस्मदोर्द्वित्वैकत्वविशिष्टार्थत्वाभावादित्यर्थः। अत्र युष्मच्छब्दस्य एकद्व्यर्थवाचित्वाभावात् सुजसङेङस्भ्योऽन्यत्र मपर्यन्तस्य क्वापि न त्वमौ नापि युवावौ, 'ङे प्रथमयोः, इत्याद्यास्तु भवन्त्येव। सुजसङेङस्सु तु 'त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ' इत्येते भवन्त्येव, तेषामेकद्व्यर्थविशेषनिबन्धत्वाभावादिति।

अमुमञ्चतीति ( ई. ४१ )—अमुमञ्चतीति विग्रहे क्विन्नन्तत्वात् प्रातिपदिकत्वेन सौ अनिदितामिति नलोपे 'उगिदचामि'ति नुमि सुलोपे संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वे 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति सूत्रेण अद्र्यादेशे यणि 'अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्' इति बलात् 'अदसोऽसे'रिति उत्वमत्वे 'अमुमुयङ्' इति। ( विशेषस्तु—'अदसोऽद्रेः' इत्यस्य व्याख्यानावसरे द्रष्टव्यः )

अदसोऽसेरिति ( ई. ४९ )—अदसः, असेः, दात्, उ, दः, मः, इति पदच्छेदः। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः, इत्यर्थः। ननु सूत्रे 'उ' इत्यस्यैवोपादानात् 'उदूतौ' इत्यर्थः कथमिति चेत्सत्यम्? उश्च ऊश्च तयोः समाहारः इति विग्रहे द्वन्द्वे सति सुब्लुकि सवर्णदीर्घे 'स नपुंसकम्' इति नपुंसकत्वे 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे समाहारस्यैकत्वादेकवचनस्य सोः 'स्वमोर्नपुंसकात्' इति लुकि निष्पन्नस्य 'उ' इत्यस्य उदूतावित्यर्थसुलभत्वात्। ह्रस्वोकारस्योदाहरणम् 'अमुम्' इति अत्र 'अदस् अम्' इति स्थिते अत्वे पररूपे 'अमि पूर्वः' इति पूर्वरूपे च कृते दात्परस्याकारस्य ह्रस्वोकारः दकारस्य मत्वं च भवति। दीर्घोकारस्योदाहरणम् 'अमू' इति। अत्र अत्वे पररूपे 'वृद्धिरेचि' इति वृद्धौ कृते 'अदौ' इति दशायां दात्परस्यौकारस्य दीर्घः ऊकारः दस्य मत्वं च भवति।

अमुमुयङ्—अयम्भावः, यथा 'कृपो रो लः' इति सूत्रेण रेफस्य ऋकारावयवरेफसदृशस्य च लत्वं भवति। तथैव 'अदसोऽसेः' इति सूत्रेण दकारद्वयस्य मकारः अकाररेफयोश्चोकारो भवतीति पक्षे अमुमुयङ् इति रूपम्। 'अलोऽन्त्यस्ये'ति सूत्रेणेकारस्योत्वं प्राप्नोति, दकारोच्चारणाच्च रेफस्योत्वं प्राप्नोतीति, दकारोपादानसामर्थ्येन रेफस्यैवोत्वं स्यादिति 'अन्त्यबाधेऽन्त्यसदेशस्य' इति परिभाषया

परस्यैव मकारे उकारे च कृते 'अदमुयङ्' इति रूपम्, असेरिति निर्देशेन यत्र सकारस्याकारो भवति, तत्रैव मुत्वं भवतीति पक्षेऽत्र मुत्वाप्राप्तिरिति अदद्र्यङ् इति रूपम्भवति ।

अमुमञ्चतीत्यर्थे—क्विन्नन्तत्वात्प्रातिपदिकत्वेन सौ अनिदितामिति नलोपे, उगिदचामिति नुमि, सुलोपे संयोगान्तलोपे 'क्विन्प्रत्ययस्ये'ति कुत्वे 'विष्वग्देवयोश्च टेरद्र्य ञ्चतावप्रत्ययः' इत्यद्र्यादेशे यणि, 'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववदि'ति बलाददसोऽसेरित्युत्वमत्वे अमुमुयङ्, अन्त्यबाधे अन्त्यसदेशस्येति बलात्परस्यैव मुत्वमिति अदमुयङ्, इति । अः से सकारस्य स्थाने यस्येत्यर्थेऽत्र तदाद्यत्वाभावेन मुत्वं नेति मते अदद्र्यङ्, इति ।

अमुमुईचः (ई. ४५, ४८, ५१)—अमुमञ्चतीति विग्रहे क्विनि उपपदसमासे सुब्लुकि 'अदस् अञ्च्' इति स्थिते 'अनिदिताम्' इति नलोपे 'विष्वग्देवयोश्च' इति अदसष्टेरदद्र्यादेशे 'अदद्रि अच्' इति स्थिते शसि विभक्तौ 'अदसोः' इत्यनेन प्रथमदकारस्य मत्वं तदुत्तराकारस्योत्वे द्वितीयदकारस्यापि मत्वे तदुत्तरस्य रेफस्य चोत्वे 'अमुमु इ अच् अस्' इति स्थिते 'अचः' इति अलोपे, यण् तु न, अलोपेन यण्निमित्तस्याकारस्य विनाशोन्मुखत्वेन 'अकृतव्यूहा' इति परिभाषया अन्तरङ्गोऽपि यण् 'अचः' इति लोपविषये न प्रवर्तते इति सिद्धान्तात्, 'चौ' इत्यारम्भसामर्थ्याद्वा । ततश्च अलोपे सति 'चौ' इत्यनेन दीर्घे सकारस्य रुत्वे विसर्गे च कृते उक्तं रूपं सिद्धम् ।

अदद्र्यङ् (ई. ३९, ४३, ४९)—'अदद्रि अञ्च्' इति स्थिते 'अनिदिताम्' इति नलोपे यणि 'अदद्र्च्' इति । तस्मात् सौ तस्य हल्ङ्यादिलोपे 'अदसोसेर्दादुदो मः' इति सूत्रेण दकारद्वयस्य 'चलीक्लृप्यते' इत्यत्र 'कृपो रो लः' इत्यनेन रीगऋकारयोरुभयोर्यथा लत्वं तथैव दकारद्वयस्यापि मत्वे, अकाररेफयोश्च उत्वे 'अमुमुयङ्' इति रूपम् । 'अलोऽन्त्यस्य' इति सूत्रेण इकारस्योत्वं प्राप्नोति दकारोच्चारणाच्चा रेफस्योत्वं प्राप्नोतीति दकारोपादानसामर्थ्येन रेफस्यैव उत्वं स्यादिति पक्षे 'अन्त्यबाधेऽन्त्यसदेशस्य' इति परिभाषया परस्यैव मत्वे उत्वे च कृते 'अदमुयङ्' इति रूपम् । 'असेः' इति निर्देशेन यत्र सकारस्याकारो भवति, तत्रैव मुत्वं भवतीति पक्षे अत्र मुत्वाऽप्राप्तेः 'अदद्र्यङ्' इति रूपम् । इदं पक्षत्रयमपि भाष्यसम्मतम् । अत उक्तं सिद्धान्तकौमुद्याम्—अदसोऽद्रेः पृथङ्मुत्वमित्यादि ।

: अप्रत्ययग्रहणं ज्ञापयति—'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यत्र अप्रत्ययग्रहणं किमर्थम् ? तदभावे उत्तरपदाधिकारत्वात् अञ्चुधातूत्तरपदे परे विष्वग्देवयोः सर्वनाम्नश्च टेरद्र्यादेशो भवति इत्यर्थेन यत्र लुप्तप्रत्ययान्तं केवलाञ्चुधातूत्तरपदं यथा–अमुमुयङ् इत्यादि तत्रैव तत्प्रवृत्तेः, विष्वगञ्चनमित्यादौ च अञ्चनमित्युत्तरपदस्य अञ्चधातुरूपत्वाभावेन तस्याप्रवृत्तेः सर्वत्राऽदोषादिति अप्रत्ययग्रहणं व्यर्थं सत् ज्ञापयति–'धातुग्रहणे तदादिविधिः' इति । एवं च प्रकृते अप्रत्ययग्रहणाभावे अञ्चुधात्वाद्युत्तरपदे इत्यर्थापत्त्या 'विष्वगञ्चनम्' इत्यत्र अञ्चनमित्यस्य अञ्चधात्वादित्वादद्र्यादेशापत्तिः ।

उदीचः ( ई. ४७ )—उत्पूर्वाद् 'अञ्च्' धातोः 'ऋत्विक्' इत्यादिना क्विनि क्विनः सर्वापहारे 'अनिदितामि'त्युपधानकारस्य लोपे 'कृदतिङ' इति क्विनः कृत्संज्ञकत्वात् 'उत् अच' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'उत् अच् अस' इति स्थिते तकारस्य जश्त्वेन दकारे 'यचि भम्' इति भसंज्ञायां 'अचः' इत्यल्लोपं प्रबाध्य 'उद ईत्' इति अचोऽकारस्य ईत्वे सस्य रुत्वे विसर्गे 'उदीचः' इति ।

समीचः ( ई. ४२ )—सम् पूर्वाद् 'अञ्च्' धातोः 'ऋत्विगि'त्यादिना क्विनि क्विनः सर्वापहारे 'अनिदितां हल उपधायः क्ङिति' इत्युपधानकारस्य लोपे 'कृदतिङ' इति क्विनः कृत्संज्ञकत्वात् 'सम् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'सम् अच् अस्' इति दशायां 'समः समि' इति समः सम्यादेशे 'समि अच् अस' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यल्लोपे 'चौ' इति दीर्घे सस्य रुत्वे विसर्गे 'समीचः' इति सिद्धम् ।

तिरश्चः ( ई. ३४ )—तिरसपूर्वकाद् 'अञ्च्' धातोः ऋत्विगि'त्यादिना क्विनि क्विनः सर्वापहारे 'अनिदितामि'ति नलोपे 'कृदतिङ' इति क्विनः कृत्संज्ञकत्वात् 'तिरस् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'तिरस् अच् अस' इति स्थिते भसंज्ञायाम् 'अचः' इत्यनेन अल्लोपे 'तिरसस्तिर्यलोपे' इत्यस्य अप्राप्त्या 'स्तोः श्चुना श्चुः' इति तस्य श्चुत्वेन शकारे सस्य रुत्वे विसर्गे 'तिरश्चः' इति ।

उगिदचामिति—अयम्भावः–अञ्चुधातोरपि उगित्त्वेन उगिदित्यंशेनैव नुम्सिद्धौ, अञ्चुग्रहणं व्यर्थं सत् धातोश्चेदुगित्कार्यं तर्हि अञ्चुधातोरेवेति नियमयति । तेन

स्वत्, ध्वत् इत्यादौ नुम् न भवति । इत्थं च अञ्चुधात्वतिरिक्तानां धातूनां नुमोऽभावसिद्धौ अधातुग्रहणं गोमानित्यस्य वर्तमानकालेऽधातुत्वाभावेऽपि पूर्वकालिकाधातुत्वमादाय नुम् स्यादित्यर्थस्यावबोधनार्थमिति दिक् ।

गोमान् ( ई. ४३, ५२ )—गोमन्तमिच्छतीति विग्रहे क्यजन्तात् अलोपे यलोपे गोमत् शब्दो निष्पन्नः । तस्मात् सौ 'अत्वसन्तस्य—' इति दीर्घे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि हल्ङ्याब्भ्यो दिलोपे संयोगान्तलोपे 'गोमान्' इति ।

नन्वत्र क्यजन्तस्य 'सनाद्यन्ता' इति धातुसंज्ञकत्वेन ततः क्विप्यपि क्विपा धातुत्वानपायात् 'उगिदचामि'ति सूत्रे अधातोः' इत्युक्तेः कथमत्र नुम्प्रवृत्तिरिति चेदत्रोच्यते—तत्र सूत्रेऽञ्चग्रहणेन अञ्चुधातोरेव ग्रहणात्तस्य चोकारेत्संज्ञकतया उगित्पदेनैव ग्रहणसिद्धेस्तद्वैयर्थ्येन 'धातोश्चेदुगित्कार्यं तर्हि अञ्चतेरेव' इत्यस्य अञ्चधातुभिन्नधातोरुगित्कार्यं न भवतीत्यर्थकस्य ज्ञापिततया तेनैव तत्सूत्रस्य धातौ निवृत्तिसिद्ध्या सूत्रे क्रियमाणस्य धातोरित्यस्य वैयर्थ्यापत्त्या तत्सामर्थ्येन भूतपूर्वस्य अधातोरपि उगितो नुमिति ज्ञापनेन क्यचः प्रवृत्तेः पूर्वं गोमतोऽधातुतया भूतपूर्वाधातुत्वेन नुमः प्रवृत्तेः सुवचत्वात् ।

तादृक् (ई. ३४, ६०)—स इवाऽयं पश्यतीति विग्रहे 'त्यदादिष्वि'ति किनि क्विनः सर्वापहारे उपपदसमासे 'आ सर्वनाम्नः' इत्यात्वे सवर्णदीर्घे तादृशशब्दो निष्पन्नः । तस्मात् सौ 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वात् 'व्रश्चभ्रस्ज' इत्यादिसूत्रेण शकारस्य षत्वे तस्य जश्त्वेन डकारे तस्य कुत्वेन गकारे हल्ङ्यादिना' सुलोपे 'वाऽवसाने' इति पाक्षिके चर्त्वे उक्तं रूपं सिद्धम् । अत्र कैयटादयः—'तादृश्' इति दशायां षत्वापवादात् कुत्वेन खकारे तस्य चर्त्वेन कत्वे तादृक्' इति प्राहुः । नच चर्त्वाऽभावपक्षे जश्त्वं प्रति कुत्वस्यासिद्धत्वात् 'तादृग्' इति द्वितीयं रूपं न स्यादिति वाच्यम् 'दिगादिभ्यः' इति निर्देशेन असिद्धत्वाभावकल्पनेनादोषात् ।

कुत्वस्यासिद्धत्वादिति—तत्पूर्वकाद् दृशेः त्यदादिष्विति क्विन्नन्तत्वात्प्रातिपदिकत्वेन सौ 'आसर्वनाम्नः' इत्यात्वे सोलोपे क्विन्प्रत्ययस्येत्यस्यासिद्धत्वात् व्रश्चेति षत्वे जश्त्वेन डकारे, ततः कुत्वेन गकारे च तादृक् तादृगिति दीक्षिताशयः । क्विन्प्रत्ययस्येत्यत्र कुः क्विन्यत इति न्यासेन दृष्ट इत्यध्याहारेण च सिद्धे प्रत्ययग्रहणं वीप्सागर्भबहुव्रीहिलाभार्थं तेन षत्वापवादत्वात्कुत्वेन खकारे चर्त्वे तादृक्, चर्त्वाभा-

वपक्षे जश्त्वं प्रति कुत्वस्यासिद्धत्वात्खकार एव दिगादिभ्य इति निर्देशान्नासिद्धत्व-मिति वा बोध्यमिति कैयटाशयः।

घृतस्पृक् ( ई. ४० )—घृतं स्पृशतीति विग्रहे 'स्पृशोऽनुदके क्विन्' इति सूत्रेण क्विन्प्रत्यये, उपपदसमासे, सुब्लुकि 'घृतस्पृश्' इति। तस्मात् सुबुत्पत्तिः, तस्य हल्ङ्यादिलोपे कुत्वस्यासिद्धत्वात् 'व्रश्चेति'सूत्रेण षत्वे, जश्त्वे घृतस्पृड् इत्यव-स्थायां 'क्विन्प्रत्ययस्य कुः' इति कुत्वे, चर्त्वे 'घृतस्पृक्' चर्त्वाभावपक्षे 'घृतस्पृग्' इति च सिद्धम्।

स्पृक् ( ई. ४१ )—क्विन्प्रत्ययस्य कुः' इत्यतः 'क्विनः कु' इत्येतावतैव क्विन-स्येति लब्धे प्रत्ययग्रहणं क्विन् प्रत्ययो यस्मादिति बहुव्रीहिलाभायेत्युक्तम्। अतःनिरु-पसर्गात् स्पृशेः क्विपि कृतेऽपि अनेन कुत्वं भवतीति 'स्पृक्' इत्यस्योदाहरणं बोध्यम्।

तादृक् ( ई. ३४ )—तदुपपदाद्दृश्धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रेण चकारात् क्विनि क्विनः सर्वापहारे जाते 'आसर्वनाम्न' इति सूत्रेण तच्छब्दस्याकारान्तादेशे सवर्णदीर्घे 'तादृश्' इत्यवस्थायां 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'तादृश्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां सौ हल्ङ्या-दिना सुलोपे 'क्विन्प्रत्ययस्य कुः' इत्यस्यासिद्धत्वात् 'व्रश्चभ्रस्जसृजमृजयजराजभ्राज-च्छशां षः' इति षत्वे 'झलां जशोऽन्ते' इति षस्य जश्त्वे 'क्विन्प्रत्ययस्य कुः' इति डस्य कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वेन ककारे 'तादृक्' इति। चर्त्वाभावे 'तादृग' इति।

षण्णाम ( ई. ५२ )—षष्शब्दात् आमि 'षट्चतुर्भ्यश्च' इति नुटि 'षष् नाम्' इति स्थिते 'झलां जशोऽन्ते' इति षस्य जश्त्वेन डकारे 'ष्टुना ष्टुः' इति नस्य ष्टुत्वेन णकारे 'प्रत्यये भाषायां नित्यम्' इत्यनेन डकारस्य च णत्वे 'षण्णाम्' इति। 'अत्र' 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधस्तु न 'अनाम्नवतिनगरीणामिति वाच्यम्' इति वार्तिकेन तन्निषेधात्। 'प्रत्यये भाषायां नित्यम्' इत्यत्र नित्यपदोपा-दानात् 'षड्णाम्' इति प्राचोक्तं द्वितीयं रूपं न युक्तिसहम्।

पिपठीः ( ई. ४७ )—पिपठिष् शब्दात् सौ हल्ङ्यादिना सुलोपे सति रुत्वे कर्तव्ये 'पूर्वत्राऽसिद्धम्' इति षत्वस्याऽसिद्धत्वात् 'ससजुषो रुः' इति सस्य रुत्वे अनुबन्धलोपे 'पिपठिर्' इति जाते 'र्वोरुपधाया दीर्घ इकः' इति उपधायाः इकारस्य दीर्घे रेफस्य 'खरवसानयो'रिति विसर्गे 'पिपठीः' इति सिद्धम्।

नुम्विसर्जनीय—अयम्भावः नुमि सति सर्वत्रैव नकारस्यानुस्वारे नुम्पदस्य लक्षणया नुम्स्थानिकानुस्वारस्य व्यवधानेऽपि षत्वं भवतीत्यर्थो भवति। तेन सुहन् सु इत्यत्र नुमः सत्त्वेऽपि षत्वन्न भवति। सु इत्यत्रापि मकारस्थानिकानुस्वारस्य सत्वात्षत्वं न। इत्थञ्चानुस्वारस्य शर्प्रत्याहारे पाठेऽपि शर्ग्रहणेनानुस्वारस्य व्यर्थता न भवति यतोऽत्र विलक्षणानुस्वारो गृह्यते।

पिपठीष्षु (ई. ३७)—पिपठिष् शब्दात् सप्तमीबहुवचने सुपि अनुबन्धलोपे 'पपठिष् सु' इति दशायां 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां सत्यां षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे अनुबन्धलोपे 'पिपठिर् सु' इति स्थिते 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'पिपठीः सु' इति जाते सत्त्वं बाधित्वा 'वा शरि' इति 'विसर्गस्य स्थाने पाक्षिके विसर्गे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे 'पिपठिःषु' इति। 'वा शरि' इति विकल्पपक्षे 'पिपठीः सु' इति दशायां 'विसर्जनीयस्य सः' इति विसर्गस्य सत्त्वे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सुपः सकारस्य षत्वे 'पिपठिस् षु' इति स्थिते 'ष्टुना ष्टुः' इति सकारस्य ष्टुत्वेन षकारे 'पिपठीष्षु' इति सिद्धं भवति।

चिकीर्षुः (ई. ३८, ५३)—चिकीर्षू शब्दात् सुपि षत्वस्यासिद्धत्वात् 'रात्सस्य' इति नियमात् सकारस्य संयोगान्तलोपे 'रोः सुपि' इति नियमात् रेफस्य विसर्गाभावे 'आदेशप्रत्यययोः' इति षत्वे उक्तं रूपं सिद्धम्।

विविट् (ई. ४५)—वेष्टुमिच्छतीति विग्रहे विशेः सनि 'हलन्ताच्च' इत्यनेन सनः कित्वाल्लघूपधगुणाभावे 'सन्यङोः' इति द्वित्वे हलादिशेषे शकारस्य झल्परकत्वात् 'व्रश्चभ्रस्ज' इत्यादिना षत्वे 'षढोः कः सि' इति षस्य कत्वे प्रत्ययावयवत्वात् सस्य षत्वे 'सनाद्यन्ता' इति धातुत्वात् क्विपि अतो लोपे 'विविक्ष' शब्दो निष्पन्नः। तस्मात् सौ तस्य हल्ङ्यादिलोपे 'संयोगान्तस्य लोपः' इत्यनेन षकारस्य लोपे ततश्च सकारस्य निमित्तस्य निवृत्त्या कत्वस्याऽपि निवृत्तौ झल्परत्वनिवृत्या पूर्वप्रवृत्तषत्वस्याऽपि निवृत्तौ, पदान्तत्वात्, 'व्रश्चे'ति षत्वे तस्य जश्त्वेन डकारे तस्य चर्त्वेन टकारे 'विविट्' इति। चर्त्वाभावे 'विविड्' इति।

न च 'विविक्ष' इति दशायां संयोगान्तलोपात् पूर्वं 'स्कोः संयोगाद्योरन्ते च' इत्यनेन ककारलोपः कुतो नेति वाच्यम्? संयोगादिलोपे कर्तव्ये 'षढोः कः सि' इति

कस्वस्यासिद्धत्वात् । एवंच कत्वस्याऽसिद्धत्वादिति वक्तव्ये षत्वस्यासिद्धत्वात् संयोगान्तलोप इति मूलोक्तं न युक्तिसहमिति तत्त्वविदः ।

तट् ( इ. ५२ )—तक्षशब्दात् सौ 'स्कोः संयोगाद्योरन्ते च' इति कलोपे सोर्हल्ङ्यादिलोपे जश्त्वे चर्त्वे 'तट्' इति ।

( तक् ) तक्ष्धातोरिति ( ई. ४६, ४८, ५१, ५२, ५५ )—तक्षधातोर्णिजन्तात् क्विपि च कृते प्रथमैकवचने 'तक् तग्' इति । तथा हि—तक्षधातोर्णिचि ण्यन्तस्य धातुत्वात् क्विपि क्विपः सर्वापहारे, 'णेरनिटि' इति णिलोपे 'तक्ष्' इति । तस्मात् सौ तस्य हल्ङ्यादिलोपे 'संयोगान्तस्य' इत्यनेन षकारस्य लोपे ककारस्य जश्त्वे चर्त्वे 'तक्' इति । चर्त्वाभावे 'तग्' इति । णिलोपे सति 'स्कोः संयोगाद्योरन्ते च' इत्यनेन कलोपस्तु न, णिलोपस्य स्थानिवत्वात् । नच 'पूर्वत्राऽसिद्धे न स्थानिवत्' इति निषेधः स्यादिति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति निषेधात् ।

विद्वान्—'विद्' धातोः लटः शतरि 'विदेः शतुर्वसुः' इति शतृस्थाने वस्वादेशे अनुबन्धलोपे 'विद्वस्' इति । तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'विद्वन्स् स' इति जाते 'सान्तमहतः संयोगस्य' इति दीर्घे 'विद्वान्स् स' इति स्थिते 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति विभक्तिसकारस्य लोपे 'संयोगान्तस्य लोपः' इत्यनेन सलोपे 'विद्वान्' इति सिद्धम् । अत्र नलोपस्तु न, संयोगान्तलोपस्याऽसिद्धत्वात् ।

सेदुषः ( ई. ४३, ५२ )—सद् धातोर्लिटि । 'भाषायां सदवसश्रुवः' इत्यनेन लिटः क्वसुप्रत्यये इत्संज्ञादिकार्ये द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत एकहल्मध्ये' इत्यनेन एत्वाभ्यासलोपयोः कृतयोः 'वस्वेकाजाद्घसाम्' इत्यनेन इटि 'सेदिवस्' शब्दो निष्पन्नः । तस्मात् शसि भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे प्राप्ते ततः पूर्वम् 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया कृतमपि कार्यं निवर्तयन्ति इत्यर्थेन इडागमस्य निवृत्तौ ततः सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आदेशप्रत्यययोः' इत्यनेन षत्वे सकारस्य रुत्वे विसर्गे 'सेदुषः' इति सिद्धम् ।

पुमान् ( ई. ३५ )—'पुंस्' शब्दात् सौ 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'सान्तमहतः संयोगस्य'

इति उपधादीर्घे हल्ङ्यादिना विभक्तेः सकारस्य लोपे 'संयोगान्तस्य लोपः' इति सलोपे 'पुमान्' इति ।

पुंसु ( ई. ४४ )—पुंसशब्दात् सुपि 'स्वादिष्वि'ति पदत्वात् संयोगान्तलोपे निमित्ताऽपायादनुस्वारस्याऽपि निवृत्तौ 'नश्च' इत्यनुस्वारे 'पुंसु' इति सिद्धम् ।

हे उसनन् ( ई. ४६ )—'उसनस्' शब्दात् सम्बोधनैकवचने 'उसनस् सु' इति दशायां 'हल्ङ्याब्भ्यः—' इति सोर्लोपे 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः' इति वार्तिकेन अनङि नलोपे च कृते 'उसन्' इति। वाग्रहणान्नलोपाभावे सोर्लोपे अनङि 'हे उसनन्' इति । अनङ्भावे सोर्लोपे सकारस्य रुत्वे विसर्गे 'हे उसनः' इति रूपत्रयं भवति ।

असकौ ( ई. ५१ )—अदस्शब्दाद् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकचि 'अदकस्' इति, तस्मात् सौ 'अदस औ सुलोपश्च' इत्यनेन 'तन्मध्यपतितन्यायेन अदस्शब्देन अदकस्शब्दस्यापि ग्रहणात् नित्यौत्वे प्राप्ते 'औत्वप्रतिषेधे साकच्कस्य वा वक्तव्यः' इति वार्तिकेन तन्निषेधे 'तदोः सः सौ' इति दस्य सत्वे सकारात्परस्याकारस्य 'सादुत्वं च' इत्यनेन उत्वे 'असुकस् स्' इति स्थिते त्यदाद्यत्वे पररूपे सस्य रुत्वे विसर्गे 'असुकः' इति । औत्वप्रतिषेधाऽभावे 'अदकस् स्' इति दशायां सस्य औत्वे सुलोपे च विहिते दस्य सत्वे 'असकौ' इति उक्तं रूपं सिद्धम् । अत्र पक्षे 'सादुत्वं चे'ति न प्रवर्तते, प्रतिषेधसंनियोगसिद्धत्वात् ।

अमुम ( ई. ५३ )—'अदस्' शब्दादमि त्यदाद्यत्वे पररूपे 'अमि पूर्वः' इति पूर्वरूपे 'अदसोऽसेर्दादुदो मः' इत्युत्वमत्वे 'अमुम्' इति ।

अमुना ( ई. ५५ ५६ )—'अदस्' शब्दात् टाविभक्तौ त्यदाद्यत्वे पररूपे च कृते 'अदसोऽसेर्दादुदो मः' इति अकारस्य उत्वे दस्य च मत्वे 'अमु आ' इति दशायाम् नाभावे कर्तव्ये सत्येव 'न मुने' इत्यनेन मुत्वस्यासिद्धत्वाऽभावबोधनात् 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति 'आ' इत्यस्य नादेशे 'अमुना' इति । नचाऽत्र मुत्वस्याऽसिद्धत्वात् 'सुपि चे'ति दीर्घः कुतो नेति वाच्यम्, 'न मुने' इत्यनेन कृते च नाभावे मुत्वस्य नासिद्धत्वमित्यर्थस्यापि तेन विधानात् ।

अमीषाम् ( ई. ३४ )—'अदस्' शब्दात् आमि त्यदाद्यत्वे पररूपत्वे च कृते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'बहुवचने झल्येत्' इति एत्वे

'आदेशप्रत्यययोः' इति षत्वे 'एत ईद्बहुवचने' इत्येकारस्य ईत्वे दस्य च मत्वे 'अमीषाम्' इति ।

'अदस्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई. ५० )—

पुंल्लिङ्गे—

| | | |
|---|---|---|
| असौ | अमू | अमी |
| अमुम् | अमू | अमून् |
| अमुना | अमूभ्याम् | अमीभिः |
| अमुष्मै | अमूभ्याम् | अमीभ्यः |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः |
| अमुष्य | अमुयोः | अमीषाम् |
| अमुष्मिन् | अमुयोः | अमीषु |

[ त्यदादेः सम्बोधनं नास्ति ]

स्त्रीलिङ्गे—

| | | |
|---|---|---|
| असौ | अमू | अमूः |
| अमुम् | अमू | अमूः |
| अमूया | अमूभ्याम् | अमूभिः |
| अमुष्यै | अमूभ्याम् | अमूभ्यः |
| अमुष्याः | अमूभ्याम् | अमूभ्यः |
| अमुष्याः | अमुयोः | अमूषाम् |
| अमुष्याम् | अमुयोः | अमीषु |

नपुंसके—

| | | |
|---|---|---|
| अदः | अमू | अमूनि |
| अदः | अमू | अमूनि |

( शेषं पुंवत् )

इति हलन्तपुँल्लिङ्गप्रकरणम् ।



# अथ हलन्तस्त्रीलिङ्गप्रकरणम्

उपानत् ( ई. ४७ )—उपानह् शब्दात् सौ हल्ङ्यादिना सुलोपे 'नहो धः' इति हस्य धत्वे 'झलां जशोऽन्ते' इति धस्य जश्त्वे 'वाऽवसाने' इति दस्य चर्त्वे 'उपानत्', चर्त्वाऽभावे 'उपानद्' इति ।

( उपनह्यते इति विग्रहे उपपूर्वात् 'णह्' धातोः 'णो नः' इति नत्वे कृते सम्पदादित्वात् कर्मणि क्विपि क्विपः सर्वापहारे 'नहिवृति-' इति पूर्वपदस्य दीर्घे 'उपानह्' शब्दो निष्पन्नः )

उष्णिक्षु ( ई. ३५, ५५ )—उत्पूर्वात् 'ष्णिह् प्रीता'वित्यस्मात् 'ऋत्विग्' इत्यादिना क्विनि निपातनात् तलोपषत्वे क्विन्नन्तत्वात् घोषनादसंवारमहाप्राणप्रयत्न-साम्यात् हस्य घत्वे 'खरि च' इति चर्त्वे 'आदेशप्रत्यययोः' इति षत्वे उक्तं रूपं जातम् ।

चतसृणाम् ( ई. ३१ )—चतुर्शब्दादामि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति 'चतसृ' आदेशे 'अचि र ऋतः' इति रेफादेशे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधेन तम्बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'चतसृणाम्' इति ।

'चतुर्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( ई. ३२ )—

( 'चतुर्' शब्दो नित्यं बहुवचनान्तः )

| | | | |
|---|---|---|---|
| पुंल्लिङ्गे— | चत्वारः | चतुरः | चतुर्भिः |
| | चतुर्भ्यः | चतुर्भ्यः | चतुर्णाम् |
| | | चतुर्षु हे चत्वारः | |
| स्त्रीलिङ्गे— | चतस्रः | चतस्रः | चतसृभिः |
| | चतसृभ्यः | चतसृभ्यः | चतसृणाम् |
| | | चतसृषु हे चतस्रः | |
| नपुंसके— | चत्वारि | चत्वारि | चतुर्भिः |
| | चतुर्भ्यः | चतुर्भ्यः | चतुर्णाम् |
| | | चतुर्षु हे चत्वारि | |

इयम् – इदम् शब्दात् सौ 'यः सौ' इति इदमो दस्य यत्वे 'त्यदादीनामः' इत्यत्वं बाधित्वा 'इदमो मः' इति इदमो दस्य मत्वे हल्ङ्यादिलोपे 'इयम्' इति।

अनया ( ई. ५२ )—इदम् शब्दात्तृतीयैकवचने त्यदाद्यत्वे पररूपत्वे टापि अनुबन्धलोपे सवर्णदीर्घे 'अनाप्यकः' इति इद्भागस्य अनादेशे 'आङि चापः' इत्याबन्तस्यैकारे 'एचोऽयवायावः' इत्यैकारस्य आयादेशे 'अनया' इति।

अस्यै ( ई. ४६ )—इदम् शब्दात् चतुर्थ्येकवचने अत्वे पररूपे टापि 'इदा ए' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमे ह्रस्वे च कृते 'हलि लोपः' इत्यनेन इदो लोपे वृद्धौ उक्तं रूपं सिद्धम्।

अस्याः ( ई. ३० )—इदम् शब्दात् ङसि अत्वे पररूपत्वे टापि सवर्णदीर्घे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे च कृते 'इदस्या अस्' इति जाते सवर्णदीर्घे 'हलि लोपः' इतीद्भागस्य लोपे सस्य रुत्वे विसर्गे 'अस्याः' इति।

अद्भिः ( ई. ४०, ४६, ५३ )—अप्शब्दात् भिसि 'अपो भिः' इति अपः पकारस्य तकारे 'झलां जशोन्ते' इति जश्त्वे सस्य रुत्वे विसर्गे 'अद्भिः' इति।

दिक्षु ( ई. ४४ )—दिश् शब्दात् सुपि 'दिश् सु' इति स्थिते 'व्रश्चभ्रस्ज' इत्यादिना शकारस्य षत्वे तस्य जश्त्वेन डकारे कृते 'क्विन्प्रत्ययस्य कुः' इत्यनेन डकारस्य कुत्वेन गकारे तस्य चर्त्वे 'दिक् सु' इति स्थिते 'आदेशप्रत्यययोः' इत्यनेन षत्वे 'दिक्षु' इति सिद्धम्।

दृक् ( ई. ४९ )—दृश्शब्दात् सौ हल्ङ्यादिलोपे 'व्रश्चभ्रस्ज'—इति शस्य षत्वे षस्य जश्त्वे 'त्यदादिषु दृशोऽनालोचने कञ् च' इति दृशेः क्विन्विधानात् अत्र क्विनोऽभावेऽपि 'क्विन् प्रत्ययस्य कुः' इति डकारस्य कुत्वेन गकारे तस्य 'वाऽवसाने' इति चर्त्वे 'दृक्' इति। चर्त्वाऽभावे 'दृग्' इति।

अमूः ( ई. ४७,६०,६१ )—अदश्शब्दात् जसि अत्वपररूपटाप्सु कृतेषु पूर्वसवर्णदीर्घे 'अदसोऽसेर्दादुदो मः' इत्यनेन ऊत्वे मत्वे सकारस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम्।

अमूभ्याम् ( ई. ३० )—अदस्शब्दात् भ्यामि अत्वे पररूपत्वे टापि सवर्णदीर्घे 'अदसोऽसेर्दादुदो मः' इति उत्वे मत्वे च जाते 'अमूभ्याम्' इति।

अमूष्यै ( ई. ४४ )—अदस्शब्दात् ङेविभक्तौ अत्वे पररूपत्वे टापि सवर्णदीर्घे 'अदा ए' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आबन्तस्य ह्रस्वे च कृते 'वृद्धिरेऽचि' इति वृद्धौ 'अदसोऽसेर्दादुदो मः' इत्युत्वे मत्वे च विहितेः आदेशप्रत्यययोः' इति षत्वे 'अमुष्यै' इति ।

इति हलन्तस्त्रीलिङ्गप्रकरणम्

## अथ हलन्तनपुंसकलिङ्गप्रकरणम्

विमलद्दिवी ( ई. ३७, ४७, ५२ )—विमला द्यौराकाशो यस्याह्नः इति बहुव्रीहौ सुब्लुकि विमलदिव् शब्दादौङि तस्य 'नपुंसकाच्च' इति शीभावे विमलदिवी इति रूपम् । नन्विदं रूपमयुक्तं 'दिव उत्' इत्युत्वप्रसङ्गात् । न च विमलदिवी इति समुदायस्यैव सुबन्ततया पदत्वान्न वकारस्य दिवशब्दरूपपदान्तत्वमिति वाच्यम् । 'सुपो धातु' इति लुप्तां दिवशब्दोत्तरां विभक्तिं प्रत्ययलक्षणेनाश्रित्य दिव् इत्यस्य पदत्वात् । न च लुका लुप्तत्वात् न प्रत्ययलक्षणमिति वाच्यम् । पदसंज्ञायास्सुबन्तधर्मतया अङ्गधर्मत्वाभावेन तत्र 'न लुमता' इति निषेधाप्रवृत्तेरिति चेन्न, 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति वार्तिकेन प्रत्ययलक्षणप्रतिषेधात् दिव् इत्यस्य पदत्वाभावादुक्तसूत्राप्रवृत्तेः ।

अन्तर्वर्तिनीमिति ( ई. ४४ )—विमला द्यौर्यस्मिन्नहनीत्यर्थे समासादौ विभक्तौ नपुंसकाच्चेति श्यादेशे प्रत्ययलक्षणेनान्तर्वर्तिनीं विभक्तिमाश्रित्य राजपुरुष इत्यादौ पूर्वस्येवात्रोत्तरपदस्यापि पदसंज्ञायां दिव उदित्युत्वे प्राप्ते 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रतिषेधेनादोषात् ।

अहोभ्याम् ( ई. ५६ )—ननु अहः अहोभ्यामित्यादौ रुत्वरत्वयोरसिद्धत्वान्नलोपः कथन्नेति चेन्न, रुपरात्रिरथन्तरेष्वह्नो रुत्वं वाच्यमिति वार्तिकारम्भसामर्थ्यादहन्नित्यादर्थ्यं एकेन नलोपाभावं निपात्य द्वितीयेन रुत्वविधानेनादोषात् ।

दीर्घाहा ( ई. ४६, ५० )—दीर्घाणि अहानि यस्मिन्नित्यर्थे समासात्सौ हल्ङ्यादिति सुलोपे प्रत्ययलक्षणेनासुपीति निषेधाद्रोऽसुपीत्यस्याप्राप्त्याऽहन्निति रुत्वेऽपि तस्याऽसिद्धत्वात् 'सर्वनामस्थाने' इति दीर्घे रेफस्य विसर्गे दीर्घाहाः निदाघ इति । सम्बुद्धौ तु दीर्घाप्राप्त्या उत्वे हे दीर्घाहो निदाघ ! इति सिद्धम् ।

**सृजेः क्विन्विधानादिति** ( ई. ३९ )—असृज्शब्दस्य पदान्तविषये कुत्वं भवति। यद्यपि इह क्विप्रत्ययो नतु क्विन् तथापि कुत्वमेव। 'क्विन्प्रत्ययस्य कुः' इत्यस्य क्विन्प्रत्ययो यस्माद्दृष्टः इत्यर्थकरणात्। 'ऋत्विग्' इत्यत्र सृजेः क्विनो विधानात् असृग्, इत्यत्र क्विप्प्रत्ययेऽपि कुत्वप्राप्तेः। न चैवं विश्वसृड् इत्यत्रापि कुत्वापत्तिरिति वाच्यम्, 'सृजिदृशोर्झल्यमकिति' इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्। अव्ययपूर्वपदे कुत्वाऽभावबोधनेन उक्तप्रयोगे आपत्त्यभावात्।

ननु सत्त्वविधायकसूत्रे 'सृज्–मृज् यज' इति विशिष्टग्रहणात् षत्वस्य कुत्वापवादत्वात् षत्वस्यैव प्राप्तिर्न तु कुत्वस्येति चेद्, उच्यते—'व्रश्चभ्रस्ज' इति सूत्रे सृजियज्योः पदान्ते षत्वं विधीयते। षत्वं तु 'कुत्वापवादः' तेन असृजः क्विप्प्रत्ययान्तस्य षत्वमेवोचितम्। 'स्रग्' इति तु 'ऋत्विग्' इत्यादिना निपातनात् कुत्वेन साधु। निपातनं नाम—अन्यादृशे प्रयोगे प्राप्ते अन्यादृशप्रयोगकरणम्। निपातेन हि अपवादशास्त्राप्रवृत्तिमात्रं बोध्यते। कुत्वं तु सूत्रेणैव भवति। एवं च 'असृग' इति अस्यतेरौणादिकेन अच्प्रत्यनेन साधु।

**असृक्** ( ई. ४३, ५१ )—सृजेः क्विनो विधानेन क्विन्प्रत्ययस्येत्यत्र बहुव्रीहिबलादत्रापि कुत्वम्। न चैवं विश्वसृडादावपि कुत्वं स्यादिति वाच्यम्, सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगेणाव्ययपूर्वपदे केवले च कुत्वकल्पनेनादोषात्। न चैवमुपयट्काम्यति उपसृट्काम्यतीति भाष्यप्रयोगासङ्गतिरिति वाच्यम्, व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वम्, असृक्शब्दे तु अस्यतेरौणादिके ऋजि प्रत्यये चोः कुरिति कुत्वेन सिद्धिरिति कल्पनेनादोषात्।

**असानि** ( ई. ५३ )—असृक्शब्दात् शसि 'पद्दन—' इति सूत्रेण 'असन्' आदेशे 'जश्शसोः शिः' इति श्यादेशे नान्तत्वात् दीर्घे 'असानि' इति। पक्षे श्यादेशे कृते झलन्तत्वान्नुमि 'नश्च' इत्यनुस्वारे तस्य परसवर्णे 'असृञ्जि' इति।

**बहूर्जि** ( ई. ५६ )—बहूर्क्शब्दात् जश्शसोः शिभावे कृते झलन्तलक्षणनुमि ऊकारादुपरि प्राप्ते 'बहूर्जि नुम्प्रतिषेधः, अन्त्यात्पूर्वो वा नुम्' इति वार्तिकेन तन्निषेधे उक्तं रूपं सिद्धम्। पक्षे तु शिभावे सति जकारात् पूर्वं रेफादुपरि नुमि कृते श्चुत्वस्यासिद्धत्वात् 'नश्च' इत्यनुस्वारे तस्य परसवर्णे 'बहूर्ञ्जि' इति।

बेभिदि ( ई. ४४, ४७, ४९, ५२ )—बेभिद्यधातोर्यङन्तात् क्विपि अतो लोपे यलोपे च कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाबहुवचनविवक्षायां जसि 'जश्शसोः शिः' इति श्यादेशे 'बेभिदि' इति जातम् । नन्वत्र श्यादेशस्य 'शिसर्वनामस्थानम्' इत्यनेन सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति झलन्तलक्षणो नुम् कस्मान्नेति चेन्न, 'अचः परस्मिन् पूर्वविधौ' इत्यनेन अल्लोपस्य स्थानिवद्भावेन अकारबुद्ध्या नुमोऽप्राप्तेः । नचाल्लोपस्य स्थानिवद्भावेन अजन्तलक्षण एव नुम् स्यादिति वाच्यम् । पूर्वस्यैव विधौ स्थानिवद्भावस्यानेन विधानात् स्वविधौ स्थानिवद्भावाप्रसक्तेः ।

ननु बेभिद् शि इति दशायां झलन्तत्वेन 'नपुंसस्य झलचः' इति नुम् कथन्न स्यादिति चेत्, न । अल्लोपस्य स्थानिवत्त्वात् । स्थानिभूतादचः पूर्वस्य कार्ये कर्त्तव्ये स्थानिवद्भावो भवति, न तु अजन्तस्य कार्ये कर्त्तव्ये, इति अजन्तलक्षणोऽपि नुम् न भवतीति भावः ।

गवाङ् ( ई. ४२ )—गाम् अञ्चति = पूजयतीति 'गवाङ' । 'गो' उपपदात् पूजार्थे अञ्च् धातोः 'ऋत्विगा'दिना क्विन्प्रत्यये तस्य सर्वापहारे उपपदसमासे सुब्लुकि 'गो अञ्च्' इति स्थिते 'नाञ्चेः पूजायाम्' इति निषेधात् 'अनिदिताम्' इति नलोपाभावे चकारस्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य कुः' इत्यने कुत्वेन ङकारे 'अवङ्स्फोटायनस्य' इत्यनेन अवङि 'गवाङ' इति । 'सर्वत्र विभाषा गोः इति प्रकृतिभावपक्षे—'गोअङ्' । पूर्वरूपे—'गोऽङ्' इति च ज्ञेयम् ।

गवाक्षु (ई. ५३,६१)—अयम्भावः–गत्यर्थे नलोपे गवाच् इति दशायाम् 'चोः कुः' इति ककारे, ककारस्य 'झलां जशोऽन्ते' इति गकारे, गकारस्य 'खरि च' इति ककारे, षत्वादिकार्ये च कृते उक्तरूपसिद्धिः ।

अत्र 'चयो द्वितीयाः शरि' इति वार्तिकेन ककारस्य खकारे कृते गवाख्षु गोअख्षु गोख्षु इति त्रीणि रूपाणि वर्धिष्यन्ते इति न शङ्कनीयम् । चर्त्वस्याऽसिद्धत्वात् ।

पूजायान्तु नलोपाभावे 'ङ्णोः कुक्' इति कुकि कुकोऽसिद्धत्वेन जश्त्वाभावे 'चयो द्वितीया' इति वार्तिकेन ककारस्य खकारे कृते गवाङ्ख्षु, गोअङ्ख्षु, गोङ्ख्षु इति त्रीणि रूपाणि वर्धन्त एवेति तत्त्वम् ।

गोऽञ्चु (ई. ३७, ५३)—गाम् अञ्चति = गच्छति, इति विग्रहे क्विन् प्रत्यये तस्य सर्वापहारे उपपदसमासे सुपि 'गो 'अञ्च् सु' इति स्थिते गतौ 'नाञ्चेः पूजायाम्' इत्यस्याप्राप्त्या नलोपे कुत्वे षत्वे अवङि 'गवाञ्चु' इति। प्रकृतिभावे 'गोअञ्चु' इति। पूर्वरूपे—'गोऽञ्चु' इति च सिद्धं भवति।

चत्वारि ( ई. ३४ )—चतुर्शब्दाद् जसि शसि वा विभक्तौ 'जश्शसो शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायाम् 'चतुरनडुहोरामुदात्तः' इत्यामि अनुबन्धलोपे 'इको यणचि' इति यणि 'चत्वारि' इति।

एनत् ( ई. ४० )—इदम् शब्दात् सौ 'अन्वादेशे नपुंसके एनद् वक्तव्यः' इति वार्तिकेन इदम्शब्दस्य एनदादेशे 'स्वमोर्नपुंसकात्' इति सोर्लुकि जश्त्वे चर्त्वे 'एनत्' इति। चर्त्वाऽभावे 'एनद्' इति।

गोचा ( ई. ३० )—गामञ्चतीति विग्रहे क्विनि क्विनः सर्वापहारे उपपदसमासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां टाविभक्तौ अनुबन्धलोपे 'गो अञ्च् आ' इति जाते 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यलोपे 'गोचा' इति पूजायान्तु 'नाञ्चेः पूजायाम्' इति नलोपनिषेधे सति 'अवङ्स्फोटायनस्य' इत्यवङि सवर्णदीर्घे 'गवाञ्चा' इति। अवङाभावपक्षे 'सर्वत्र विभाषा गोः' इति प्रकृतिभावे 'गो अञ्चा' इति। प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे 'गोऽञ्चा' इति।

'गवाक्' शब्दस्य रूपाणि ( ई. ४२ )

प्रथमायां (१६)—गवाक् गवाग्-गोअक्-गोअग्-गोऽक्-गोऽग्, गवाङ् गोअङ्-गोऽङ् (९) गोची-गवाञ्ची-गोअञ्ची-गोऽञ्ची (४) गवाञ्चि-गोअञ्चि-गोऽञ्चि (३)।

द्वितीयायां ( १६ )—पूर्ववत्।

तृतीयायां (१६)—गोचा-गवाञ्चा-गोअञ्चा-गोऽञ्चा (४)। गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् ( ६ )। गवाग्भिः-गोअग्भिः-गोऽग्भिः, गवाङ्भिः-गोअङ्भिः-गोऽङ्भिः (६।

चतुर्थ्यां (१६)—गोचे-गवाञ्चे-गोअञ्चे-गोऽञ्चे (४) गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६) गवाग्भ्यः-गोअग्भ्यः-गोऽग्भ्यः, गवाङ्भ्यः, गोअङ्भ्यः, गोऽङ्भ्यः ( ६ )।

पञ्चम्यां (१६)—गोचः–गवाञ्चः–गोअञ्चः–गोऽञ्चः (४) गवाग्भ्याम्–गोअग्भ्याम्–गोऽग्भ्याम्, गवाङ्भ्याम्–गोअङ्भ्याम्–गोऽङ्भ्याम् (६)। गवाग्भ्यः–गोअग्भ्यः, गोऽग्भ्यः, गवाङ्भ्यः–गोअङ्भ्यः–गोऽङ्भ्यः (६)।

षष्ठ्यां (१२)—गोचः–गवाञ्चः–गोअञ्चः–गोऽञ्चः (४)। गोचोः–गवाञ्चोः–गोअञ्चोः–गोऽञ्चोः (४)। गोचाम्–गवाञ्चाम्–गोअञ्चाम्–गोऽञ्चाम् (४)।

सप्तम्यां (१७)—गोचि गवाञ्चि–गोअञ्चि–गोऽञ्चि (४)। गोचोः–गवाञ्चोः गोअञ्चोः–गोऽञ्चोः (४)। गवाक्षु–गोअक्षु, गोक्षु, गवाङ्क्षु,–गोअङ्क्षु–गोऽङ्क्षु, गवाङ्षु–गोअङ्षु–गोऽङ्षु (९)। (सर्वं मिलित्वा १०९ रूपाणि भवन्ति।) तदुक्तं 'गवाक्छब्दस्य रूपाणि०' इत्यादि मूले।

ददन्ति—'ददत्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि प्राप्ते 'नाभ्यस्ताच्छतुः' इति निषेधे कृते 'वा नपुंसकस्य' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'ददन्ति' इति। नुमभावे 'ददति' इति।

तुदन्ती (ई. ४३, ५०, ५२)—'तुदत्' शब्दाद् औ विभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे 'तुदत् ई' इति स्थिते 'आच्छीनद्योर्नुम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'तुदन्ती' इति। नुमभावे 'तुदती' इति।

पचन्ती (ई. ४४, ४७, ५१, ५३)—'पचत्' शब्दाद् औविभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे 'पचत् ई' इति दशायाम् 'शप्श्यनोर्नित्यम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'पचन्ती' इति।

धनूंषि—'धनुस्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधायाः दीर्घे 'नश्चापदान्तस्य—' इत्यनुस्वारे 'नुम्विसर्जनीय—' इति सस्य षत्वे 'धनूंषि' इति।

स्वाम्पि (ई. ४४, ४९, ५१, ५२, ५८)—सु=शोभना आपो यस्मिन् सरसीति विग्रहे समासे 'स्वप्' इति। तस्मात् जश्शसोः श्यादेशे 'स्वप् इ' इति स्थिते 'अप्तृन्नि'ति दीर्घे 'नपुंसकस्य झलचः' इति झलन्तलक्षणनुमि अनुस्वारे पर-

सवर्णे च कृते 'स्वाम्पि' इति सिद्धम्। ननु 'अप्तृन्' इति दीर्घं बाधित्वा परत्वान्नित्यत्वाच्च नुमि कृते अकारस्य उपधात्वाभावात् कथं दीर्घ इति चेन्न, 'अप्तृन्' इति दीर्घस्य प्रतिपदोक्तत्वेन प्रबलत्वात्। यदि च 'शेषाद्विभाषा' इति सूत्रोक्तभाष्यात् 'निरवकाशत्वं प्रतिपदोक्तत्वम्' इति गृह्यते तदा 'अप्तृन्' इति दीर्घस्य 'आपः' इत्यत्र सावकाशत्वेन परत्वात् नित्यत्वाच्च दीर्घं बाधित्वा नुमि अनुस्वारे परसवर्णे च 'स्वम्पि' इत्यपि साधु। सिद्धान्तिनस्तु—'अप्तृन्' इत्यस्य प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया प्रथमं प्रवृत्तौ स्वाम्पीत्येव युक्तमित्याहुः।

प्रतिपदोक्तत्वात् नुम्—अयम्भावः, लक्षणप्रतिपदोक्तपरिभाषया नित्यात्परादपि नुमः पूर्वम् 'अप्तृन्' इति दीर्घे पश्चान्नुमि स्वाम्पीति सिद्धम्। यदि च प्रतिपदोक्तं कुत्रचिच्चरितार्थंन्न स्यात्, तदा लक्षणप्रतिपदोक्तपरिभाषाविषयो भवतीति पक्षे आप इत्यत्र 'अप्तृन्' इति सूत्रस्य सफलत्वेन परिभाषाविषयाभावात्पूर्वं नुमि, उपधाया अभावेन दीर्घाभावे स्वम्पीति रूपम्।

पिपठिषि ( ई. ४४, ४६, ५२ )—पठ्धातोः सनि इटि द्वित्वादिकार्ये 'पिपठिष' इति सन्नन्तात् क्विपि अतो लोपे 'पिपठिष' इति। तस्मात् जसि 'जश्शसोः शिः' इति श्यादेशे 'पिपठिषि' इति। नन्वत्र 'नपुंसकस्य झलचः' इति झलन्तलक्षणनुम् कुतो नेति चेन्न, अल्लोपस्य स्थानिवत्त्वात्। नन्वेवमजन्तलक्षण एव नुम् कुतो नेति चेन्न, स्वविधौ स्थानिवत्त्वाऽभावात्।

पयांसि ( ई. ३५ )—'पयस्' शब्दाज्जसि 'जश्शसोः शिः' इति श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधाया दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'पयांसि' इति।

सुपुंसी ( ई. ५३ )—'सुपुंस्' शब्दात् औङः श्यादेशे रूपम्।

सुपुमांसि ( ई. ३४ )—'सुपुंस्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः स्थाने श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'सुपुमस् इ' इति स्थिते 'नपुंसकस्य झलचः' इति नुमि 'सान्तमहतः' इति दीर्घे नस्यानुस्वारे 'सुपुमांसि' इति सिद्धम्।

इति हलन्तनपुंसकलिङ्गप्रकरणम्।

# अथ अव्ययप्रकरणम्

**स्वरादिनिपातमव्ययम्** ( ई. ३६ )—स्वर् आदिर्येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः, अव्ययम् इति पृथक पदम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति स्मरणात्—'स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः' इति सूत्रार्थः ।

**स्वरादिति** ( ई० ४० )—स्वर् , इति स्वर्गे परलोके च । अन्तर् , इति मध्ये । प्रातर् , इति प्रत्यूषे । पुनर् , इति अप्रथमे, विशेषे च । सनुतर् , इति अन्तर्धाने ।

**स्मारं स्मारम्** ( ई. ३३ )—स्मृत्वा स्मृत्वा इत्यर्थः । अत्र 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल् 'अचो ञ्णिति' इति वृद्धिः रपरत्वम् , 'नित्यवीप्सयोः' इति द्वित्वम् , 'कृन्मेजन्तः' इति मान्तकृदन्तत्वादव्ययत्वम् , सोर्लुक् च ।

**जीवसे** ( ई. ४२ )—अव्ययपदमिदम् । 'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्' ॥ अत्र 'तुमर्थे सेसेनसे' इत्यादिना असे प्रत्यये कृते 'कृन्मेजन्तः' इत्यनेन एजन्तत्वात् अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इत्यनेन सुब्लुक् भवति ।

**पिबध्यै** ( ई. ५३ )—अत्र 'तुमर्थे से—' इत्यादिना शध्यैप्रत्यये शित्त्वात् सार्वधातुकत्वे 'पाघ्राध्मा—' इत्यादिना पिबादेशे 'कृन्मेजन्तः' इत्यव्ययत्वात् अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सोर्लुक् ।

**उदेतोः** ( ४४, ५४ )—उत्पूर्वादिण्धातोः 'भावलक्षणे स्थेणकृञ्वदिचरि, हुतमिजनिभ्यस्तोसुन्' इति तोसुन्प्रत्ययेऽनुबन्धलोपे गुणे उपसर्गसम्बन्धिनस्तस्य जश्त्वे 'उदेतोस्' इत्यस्य तोसुन्प्रत्ययान्तत्वेन 'क्त्वातोसुन्कसुनः' इत्यनेन अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इत्यनेन तस्माद्विहितस्य सोर्लुकि सकारस्य रुत्वे विसर्गे 'उदेतोः' इति सिद्धम् ।

**विसृपः** ( ई. ४०, ५१ )—वि उपसर्गात् सृप्धातोः 'सृपि तृदोः कसुन्' इति कसुन्प्रत्यये 'क्त्वातोसुन्कसुनः' इति अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सुब्लुकि रुत्वे विसर्गे 'विसृपः' इति सिद्धम् ।

तत्र शालायाम् ( ई. ४० )—तत्रेत्यस्य अव्ययत्वात् 'अव्ययादाप्सुपः' इति आपो लुक्। स्त्रीत्वबोधनाय प्रकृते 'शालायाम्' इत्युक्तम्।

अत्युच्चैसौ ( ई. ४३, ४८, ५० )—उच्चैरतिक्रान्तः इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। अत्र समासाद्विहितस्य सुपः अव्ययभूतादुच्चैश्शब्दात् परत्वेऽपि ततो विहितत्वाऽभावात् 'अव्ययादाप्सुपः' इति न लुक्। अत्युच्चैरिति समुदायस्य तु नाव्ययत्वम्, स्वरादिगणे उच्चैश्शब्दस्य केवलस्य पाठात्। ननु स्वारादिगणे केवलोच्चैश्शब्दस्य पाठेऽपि तदन्तविधिना 'स्वरादिनिपातमव्ययम्' इत्यनेन अत्युच्चैश्शब्दस्याऽपि अव्ययसंज्ञा कुतो नेति चेन्न, 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायस्य जागरूकत्वात्।

अव्ययलक्षणम् ( ई. २५ )—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' इति।

त्रिषु लिङ्गेषु, सर्वासु विभक्तिषु, च सर्वेषु वचनेषु, च यत् न व्येति = विकारं न प्राप्नोति, किन्तु सदृशम् = एकप्रकारकम्, एव भवति, तद् 'अव्ययम्' इत्यर्थः।

पिधानम्—'पिधानम्' इत्यव्ययपदम्। अत्र 'भागुरि' नामकाचार्यमते अपीत्युपसर्गस्याऽकारस्य लोपे 'अव्ययादाप्सुपः' इति सुलोपे च कृते 'पिधानम्' इति सिद्धं भवति। यदाह मूले—

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥' इति।

इत्यव्ययप्रकरणं समाप्तम्।

---

## अथ स्त्रीप्रत्ययप्रकरणम्

अजादिभिः स्त्रीत्वस्येति—'प्रत्ययः' 'परश्च' इति निर्देशेन प्रत्ययविधौ पञ्चम्या युक्तत्वेन 'अजाद्यतष्टाप्' इति सूत्रेऽजाद्यतः इति पदस्य पञ्चम्यन्तत्वे 'प्रातिपदिकात्' इत्यधिकारात् प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन 'अजाद्यतः' इत्यस्य च पञ्चम्यन्तत्वेन द्वयोरेकविभक्तित्वेन विशेष्यविशेषणभावसत्त्वात् 'येन विधिस्तदन्तस्य' इति सूत्रेण तदन्तविधौ, अजाद्यदन्तात् प्रातिपदिकात् टाप् स्यात् स्त्रीत्वे द्योत्ये इत्यर्थेन पञ्चाजीत्यत्रापि टाबापत्तिः। 'समासप्रत्ययविधौ प्रतिषेधः'

इति तदन्तविधिनिषेधस्तु न शङ्क्यः । 'अमहत्पूर्वग्रहणेन' अनुपसर्जनाधिकारेण च स्त्रीप्रत्यये तदन्तविधिज्ञापकात् ।

इत्यश्लोक्तदोषवारणाय 'अजाद्यतः' इति पदं सूत्रे षष्ठ्यन्तमेव, तथा सति प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन अजाद्यत इत्यस्य च षष्ठ्यन्तत्वेन द्वयोर्विशेषण-विशेष्यभावाभावेन तदन्तविध्यभावात्, अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये प्रातिपदिकाट्टाप् स्यादित्यर्थे पञ्चाजीति समासपदे पञ्चाजशब्दसमुदाय-वाच्यं स्त्रीत्वं वर्तते, न तु अजमात्रशब्दवाच्यं स्त्रीत्वमिति नास्ति काचिदनुपपत्ति-रिति भावः ।

पञ्चाजी ( ई. ५२,५५,५६ )—पञ्चानामजानां समाहारः इति विग्रहे 'तद्धि-तार्थ—' इति द्विगुसमासे सुब्लुकि 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे 'द्विगोः' इति ङीपि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'पञ्चाजी' इति । अत्र समासार्थभूतो यः समाहारः तन्निष्ठं स्त्रीत्वं पञ्चाजेति समुदाये सत्त्वेन 'अजाद्यतष्टाप्' इत्यत्र 'अजाद्यतः' इति षष्ठीमाश्रित्य अजादीनाम् अदन्तस्य च वाच्ये स्त्रीत्वे टाप्—इत्येवम् अजादिभिः स्त्रीत्वस्य विशेषणादत्र न टाप् ।

शूद्रशब्दस्य स्त्रियां ( ई. ३६ )—शूद्रशब्दस्य स्त्रियां—'शूद्रा, शूद्री' इति रूपद्वयम् । शूद्रजातिश्चेद्वाच्या तदा 'शूद्रा चामहत्पूर्वा जातिः' इति वार्तिकेन जाति-लक्षणं ङीपं बाधित्वा टापि शूद्रेति रूपम् । शूद्रस्य स्त्री इत्येवं पुंयोगात् स्त्रियां व्यक्तौ वाच्यायां 'पुंयोगादाख्यायाम्' इति ङीषि शूद्रीति रूपम् ।

शूद्रा चामहत्पूर्वा जातिः (ई.६१)—अत्र 'शूद्रा च' इत्येको योगः, 'अमहत्पूर्वा जातिः' इत्यपरो योगः । पूर्वयोगे 'जातिः' इत्यपकृष्यते। ततश्च 'शूद्रशब्दः टापं लभते जातिश्चेद् वाच्या' इत्येकोऽर्थः । 'महत्पूर्वः शूद्रशब्दः टापं न लभते जातिश्चेद् वाच्या' इत्यपरोऽर्थः । इत्थं च शूद्रत्वजातिविशिष्टेति विग्रहे शूद्रशब्दात् टापि दीर्घे स्वादि कार्ये 'शूद्रा' इति सिद्ध्यति । 'महाशूद्री' इत्यत्र तु महत्पूर्वकत्वेन टापोऽभावात् 'पुंयोग' इति ङीष् भवति ।

भवन्ती ( ई. ५६ )—शत्रन्तात् भवत्—शब्दात् 'उगितश्चे'ति ङीपि 'उगिद-चाम्—' इति नुमि विभक्तिकार्ये 'भवन्ती' इति ।

उगिदचामिति—अयम्भावः, उखापूर्वकस्रंसुधातुरुगित्, तस्मात् क्विपि 'अनि दिताम्' इति नलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सुप्रत्यये हल्ङ्याादिलोपे सकारस्य

पदान्तत्वात् 'वसुस्रंसु' इति सूत्रेण दत्वे चर्त्वे च कृते उखास्रदिति। न चात्र उगित्वात् स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीबापत्तिरिति वाच्यम्। 'उगिदचां सर्वनामस्थानेऽधातोः' इति सूत्रे अञ्चुधातोरुगित्त्वेन नुमि सिद्धे अञ्चुग्रहणेन 'सिद्धे सति आरम्यमाणो विधिर्नियमाय भवति' इति नियमात् धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमात् अञ्चुधात्वतिरिक्तधातूनामुगित्कार्याभावज्ञापनेन स्रंसुधातावपि तदप्रवृत्तेरित्यलम्।

प्राची ( ई. ४२ )—'उगिदचाम्–' इति सूत्रस्य अज्ग्रहणेन 'धातोश्चेदुगित्कार्यं तर्हि अञ्चतेरेवेति नियमस्य जागरूकत्वेऽपि 'उगितश्चे'ति सूत्रेणात्र ङीप्।

अतिसुत्वरी (ई. ५३)—सुत्वानमतिक्रान्तेति विग्रहे क्वनिपि 'वनो र च' इति सूत्रे क्वनिपो ग्रहणेन तेन सूत्रेण ङीपि रान्तादेशे च कृते 'यस्येति च' इत्यलोपे विभक्तिकार्ये उक्तप्रयोगसिद्धिः।

अयम्भावः—'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्' इति परिभाषया प्रत्ययान्ततदादिरूपार्थस्य लाभो भवति, ततश्च प्रत्ययान्ततदादिर्विशेषणं, प्रातिपदिकञ्च विशेष्यमिति 'येन विधिस्तदन्तस्य' इति सूत्रेण पुनस्तदन्तविधौ प्रत्ययान्ततदाद्यन्तरूपं यत्प्रातिपदिकमित्यर्थस्य लाभः।

इत्थञ्च 'वनो र च' इति सूत्रस्य वन्नन्तान्तात्प्रातिपदिकात् ङीप्, रश्चान्तादेश इत्यर्थो भवति। प्रत्ययान्ततदादि सुत्वन्निति तदन्तप्रातिपदिकम् अतिसुत्वन् इति। ततश्चोक्तप्रयोगे ङीप् रान्तादेशश्च सिद्धः।

अतिधीवरी (ई. ५१,६०)—धीवानमतिक्रान्ता–अतिधीवरी। 'अन्येभ्योऽपि दृश्यते' इति क्वनिप् प्रत्यये 'घुमास्थे'तीत्वे 'वनो र च' इति वन्नन्तात् अतिधीवन्शब्दात् स्त्रियां ङीपि रश्चान्तादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'अतिधीवरी' इति।

शर्वरी (ई. ५४)—शृधातोः 'अन्येभ्योऽपि दृश्यते' इति वनिपि गुणे रपरत्वे 'वनो र च' इति स्त्रियां ङीपि रश्चान्तादेशे भत्वादलोपे विभक्तिकार्ये 'शर्वरी' इति।

अवावा ( ई. ४१ )—ओण्धातोः वनिपि 'विड्वनो'रित्यात्त्वे अवादेशे ओण् इति धातोर्हसान्ताद्वन्विहितत्वेन 'वनो न हश इति वक्तव्यम्' इति वार्तिकेन 'वनो र च' इति प्राप्तङीब्रत्वयोः प्रतिषेधात् राजवद्रूपं बोध्यम्।

बहुधीवरी ( ई. ३४, ४४, ४६, ४८, ५५ )—बहवो धीवानः यस्याः इति विग्रहे 'बहुव्रीहौ वा' इति वार्तिकेन ङीपि रश्चान्तादेशे भत्वादल्लोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । ङीप् रत्वाभावपक्षे 'डाबुभाभ्याम्—' इति डीपि 'बहुधीवा' इति । रमावत् ।

बहुधीवा ( ई. ३४, ४६, ४८, ५५ )—'वनो र च' इति ङीप्रत्वाऽभावपक्षे रूपमिदम् । अत्र पक्षे 'डाबुभाभ्यामन्यतरस्याम्' इति 'बहुधीवन् आ' इति स्थिते टिलोपे बहुधीवाशब्दात् सोर्हल्ङ्यादिलोपे 'बहुधीवा' इति । ङीप्रत्वयोः डापश्चाभावे 'अनो बहुव्रीहेः' इति ङीप्निषेधात् राजवद् रूपं बोध्यम् ।

द्विपदी ( ई. ४४ ) द्वौ पादौ यस्याः इति विग्रहे समासे 'संख्यासुपूर्वस्य' इत्यनेन पादशब्दान्तस्याकारस्य लोपे 'पादोऽन्यतरस्याम्' इत्यनेन ङीपि भत्वात् 'पादः पत्' इत्यनेन पदादेशे 'द्विपदी' इति । ङीबभावपक्षे 'द्विपात्' इति ।

पञ्च (ई.५२)—अत्र षट्संज्ञायां जश्शसोर्लुकि नलोपे च कृते 'ष्णान्ता षट्' इति षट्संज्ञां प्रति 'न लोपः सुप्स्वर—' इति नलोपस्यासिद्धत्वात् 'न षट्स्वस्रादिभ्यः—' इति निषेधान्न टाप् ।

पञ्च चतस्रः—पञ्चन्शब्दात् प्रथमाबहुवचने जसि, शसि वा 'ष्णान्ताः षट्' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे पञ्चेति सिद्धम् । नचात्र कार्यकालपक्षे प्रतिकार्यं संज्ञाप्रवृत्तेः सिद्धान्तिततया जसशसलुगर्थं प्रवृत्तया षट्संज्ञया अन्यकार्यसाधनासम्भवेन नलोपोत्तरं 'पञ्च' इत्यत्र षट्संज्ञाया अप्राप्तया 'न षट्स्वस्रादिभ्यः' इत्यस्याप्रवृत्तेरदन्तत्वादजाद्यतष्टाप्, इति टाप् स्यादिति वाच्यम् ! नलोपे कृतेऽपि नलोपस्य 'सुप्स्वरसंज्ञातुग्विधिषु कृति' इति नियमेन षट्संज्ञादृष्ट्या असिद्धत्वेन नान्तबुद्ध्या तत्संज्ञाप्रवृत्तौ 'न षट्' इति निषेधेन टापोऽभावात् । न च 'न षड्' इत्यनेन ङीप एव निषेधः स्यादिति वाच्यम्, 'न षट्स्वस्रादिभ्यः' इत्यनेन हि षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च स्त्रियां यद् यत् प्राप्नोति तस्य सर्वस्याऽपि निषेधः क्रियते इति टापोऽपि निषेधसत्त्वात् । 'चतसृ+जस्' इत्यत्र ऋदन्तलक्षणङीप् न । स्वस्रादिषु चतसृशब्दस्य पाठात् ।

बहुराज्ञी ( ई. ३४, ४५, ४९ )—बहवः राजानः यस्याः इति विग्रहे बहुराजन्—शब्दात् 'अनो बहुव्रीहेः' इति प्राप्तं ङीब्निषेधं प्रबाध्य 'डाबुभाभ्याम्—

इति डापि प्राप्ते तमपि प्रबाध्य 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीपि विभक्त्यादिकार्ये 'बहुराज्ञी' इति। ङीबभावपक्षे 'डाबुभाभ्यामन्यतरस्याम्' इत्यनेन डापि विभक्त्यादिकार्ये 'बहुराजा' इति। 'अनो बहुव्रीहेः' इति ङीब्निषेधपक्षे तु 'बहुराजा' इति राजन्-शब्दवद् बोध्यम्।

**कारिका ( ई. ५६, ५७ )**—कारकशब्दात् 'अजाद्यतष्टाप' इति टापि सवर्णदीर्घे 'प्रत्ययस्थात्–' इति कात्पूर्वस्य रेफादकारस्य इत्वे विभक्तिकार्ये 'कारिका' इति।

**पूर्वस्य किम् (ई. ४२, ४८, ५८)**—अयम्भावः, 'प्रत्ययस्थात्कात्' इति सूत्रे पूर्वस्येत्यस्याभावे 'तस्मादित्युत्तरस्य' इति परिभाषया अव्यवहितपरस्येत्यंशस्योपस्थितौ प्रत्ययस्थककाराव्यवहितपरस्याकारस्येत्त्वं स्यादित्यर्थे कटुकेत्यत्रेत्त्वापत्तिः। कटुक आ इति दशायाम् 'अकः सवर्णे दीर्घः' इति न शंक्यः, 'वार्णादाङ्गं बलीय' इति परिभाषया सूत्रस्यापवादत्वाच्च सवर्णदीर्घप्रवृत्तेः। कृते तु पूर्वग्रहणे तत्सामर्थ्यात्परिभाषायाः पूर्वम् अप्रवृत्तौ पूर्वस्याकारस्येत्यादिसूत्रार्थो भवति, ततश्च नास्ति दोषः।

**दाक्षिणात्यिका ( ई. ५४ )**—दक्षिणस्यां दिशि भवः इत्यर्थे 'दक्षिणापश्चात् पुरसस्त्यक्' इति त्यकि कित्त्वादादिवृद्धौ 'दाक्षिणात्य' इति, तस्मात् टापि 'दाक्षिणात्या' इति। तस्मात् दाक्षिणात्याशब्दात् स्वार्थे कः 'केऽणः' इति टापो ह्रस्वे पुनष्टापि 'त्यक्त्यपोश्च' इति इत्वे सोर्हल्ङ्याादिलोपे उक्तं रूपं सिद्धम्।

**अधित्यका ( ई. ५३ )**—'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन् प्रत्ययान्तात् अधित्यकशब्दात् टापि सोर्हल्ङ्याादिलोपे उक्तं रूपं सिद्धम्। 'प्रत्ययस्थात्—' इति इत्वं तु न 'त्यकनश्च निषेधः' इति निषेधात्।

**आर्यिका ( ई. ३३, ४६ )**—आर्याशब्दात् स्वार्थिके कप्रत्यये 'केऽणः' इत्यनेन यकारादाकारस्य ह्रस्वे स्त्रीत्वाट्टापि दीर्घे आर्यका इति, तस्मात् सौ तस्य हल्ङ्याादिलोपे 'उदीचामातः स्थाने यकपूर्वायाः' इत्यनेन यकारादकारस्य आकारस्थानिकत्वात् पाक्षिके इत्वे सिद्धं रूपम्। इत्त्वाऽभावे 'आर्यका' इति।

**शुभंयिका**—शुभं यातीति शुभंयाः, 'अन्येभ्योऽपि दृश्यते' इति विच्। तस्मात् शुभंयाशब्दात् स्वार्थे कः 'केऽणः' इति ह्रस्वे टापि 'प्रत्ययस्थात्—' इति इत्वे सोर्हल्ङ्याादिलोपे उक्तं रूपं सिद्धम्। 'उदीचामातः स्थाने—' इति सूत्रार्थे स्त्रीप्रत्यय इत्यनुक्तौ तु अत्रापि इत्त्वविकल्पापत्तेः।

एषाद्वा एतयोस्तु—'भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि' इति सूत्रस्य व्याख्यावसरे आह—'एषा द्वे'ति । अयम्भावः—यत्र भस्त्राशब्दोऽनुपसर्जनः तत्र 'अभाषितपुंस्काच्च' इत्यनेन इत्वम् । उपसर्जने तु—'भस्त्रैषा' इत्यनेन इत्वम् । 'अनेषका' इत्यादौ इत्वं न सिद्ध्यति । तथा हि—'न सु' 'एतत् सु' इत्यलौकिकविग्रहे 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया त्यदादित्वात् प्राक् सुपो लुकि ततस्त्यदादिसमासरूपप्रातिपदिकाट्टापि सुब्विशिष्टस्य समासत्वे जाते सति समासघटकसुप्पर एवायं टाप् इतीत्वमत्र न भवति, 'असुपः' इति प्रतिषेधात् । इह सूत्रे 'उदीचामातः स्थाने' इत्यस्मादातः स्थाने इत्यनुवर्तते । तच्च स्वशब्दाकारस्य विशेषणम् । द्व्येषयोस्तु सर्वनामत्वेन टेः प्रागकचि कृते ककारात् पूर्वं ह्रस्वाकारस्य विद्यमानत्वेन आतः स्थाने अकारस्याऽसम्भवात् । भस्त्रादीनां सर्वत्रैव आतः स्थानिन एव आकारस्य सम्भवेन व्यभिचाराऽभावात् । स्वशब्दस्तु यत्र आत्मीयरूपार्थस्य वाचकः, तत्रैव स्त्रीलिङ्गे वर्तते । एवं सति अनुपसर्जनवाचित्वे अकचि सति आकारस्थाने अकाराभावेन उदाहरणं न भवति । किन्तु यत्र उपसर्जनवाची स्यात्, तत्र सर्वनामत्वाभावेन कप्रत्यये कृते उदाहरणं सम्भवति । तथा च स्वस्या निष्क्रान्ता इति विग्रहे उपसर्जनह्रस्वे टापि अज्ञाता निःस्वा 'निःस्विका' 'निःस्वका' इति रूपद्वयं सिद्धम् । आत्मीये स्विकेति नित्यमित्वमिति दिक् ।

भस्त्रैषाजाज्ञेति—अत्र सूत्रे 'आतः स्थाने' इत्यनुवृत्तस्य स्वशब्दस्यैव विशेषणमिति संज्ञोपसर्जनाभ्यामन्यत्र आत्मीयायाम् अकचि आतः स्थानिकत्वाऽभावात् 'स्विका' 'परमस्विका' इत्यत्र 'प्रत्ययस्थात्—' इति नित्यमेव इत्वं भवति । संज्ञोपसर्जनयोस्तु टापि अज्ञाते के 'केऽणः' इत्यनेन ह्रस्वे पुनष्टापि 'स्विका, स्वका, निःस्विका, निःस्वका, इत्यादौ विकल्पेनाऽनेन इत्वमिति ।

अद्वके (ई. ६४)—नञ्समासनिष्पन्नाद् अकज्विशिष्टाद् अद्वकिशब्दात् त्यदाद्यत्वे पररूपे टापि औङः शीभावे 'आद्गुणः' इति गुणे 'अद्वके' इति । अत्र 'भस्त्रैषा' इति इत्वन्तु न, अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात् ।

निर्भस्त्रिका-निर्भस्त्रका (ई. ५०,६०)—भस्त्रायाः निष्क्रान्तेति विग्रहे 'निरादयः—' इति समासे 'गोस्त्रियोः—' इति ह्रस्वत्वे पुनष्टापि समासात् सौ कप्रत्यये 'केऽणः' इति ह्रस्वे निर्भस्त्रकशब्दात् पुनष्टापि सवर्णदीर्घे 'भस्त्रैषा—' इति विभाषया इत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् । अत्र केन व्यवधानात् न सुपः परष्टाबिति ।

**अजिका-अजका** ( ई. ४४ )—अजाशब्दात् कप्रत्यये 'केऽणः' इति ह्रस्वे पुनष्टापि सवर्णदीर्घे 'भस्त्रैषाजाज्ञाद्वा—' इति विभाषया इत्त्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**द्विके-द्वके** ( ई. ४७ )—अकज्विशिष्टात् द्वकिशब्दात् स्त्रियामौङि त्यदाद्यत्वे पररूपे टापि औङः शीभावे गुणे 'भस्त्रैषाजाज्ञाद्वा' इति विभाषया इत्त्वे उक्तं रूपं सिद्धम् ।

**गङ्गाका-गङ्गिका-गङ्गका** ( ई. ४१,४५ )—गङ्गाशब्दात् कप्रत्यये 'केऽणः' इति ह्रस्वे स्त्रीत्वविवक्षायां पुनष्टापि 'आदाचार्याणाम्' इत्यात्वे विभक्त्यादिकार्ये 'गङ्गाका' इति । पक्षे 'अभाषितपुंस्काच्च' इति विभाषया इत्त्वे विभक्तिकार्ये 'गङ्गिका' इति इत्त्वाभावे 'गङ्गका' इति ।

**अखट्विका** ( ई. ५१, ५२, ५५ )—'न विद्यते खट्वा यस्याः' इत्यर्थे बहुव्रीहिसमासे सति 'शेषाद्विभाषा' इत्यस्य विकल्पपक्षे 'गोस्त्रियोः—' इति ह्रस्वे स्त्रीत्वविवक्षायां पुनष्टापि विभक्तिकार्ये 'अखट्वा' इति । तस्मात् अज्ञाता खट्वा इत्यर्थे कप्रत्यये 'केऽणः' इति ह्रस्वे पुनष्टापि बहुव्रीहेर्भाषितपुंस्कत्वात् ततो विहितस्यातः स्थानिकाकारस्य 'अभाषितपुंस्काच्च' इति विभाषया इत्त्वाप्राप्ते 'प्रत्ययस्थात्—' इति नित्येत्त्वे उक्तं रूपं सिद्धम् ।

( अत्रैव समासात् 'शेषाद्विभाषा' इति कपि 'गोस्त्रियोः—' इति ह्रस्वाभावे 'केऽणः' इति प्राप्तह्रस्वस्य 'न कपि' इति निषेधे 'आपोऽन्यतरस्याम्' इति वैकल्पिकह्रस्वे 'अभाषितपुंस्काच्च' इत्यनेन इत्त्वविकल्पे विभक्तिकार्ये 'अखट्विका-अखट्वका' इति । ह्रस्वाऽभावपक्षे 'अखट्वाका' इति च भवति । )

**शैषिके कपि तु विकल्प एव** ( ई. ४४ )—अयम्भावः—न सु खट्वा सु इति स्थिते 'शेषाद्विभाषा' इति कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् समाससंज्ञायां 'समासान्ताः' इति शास्त्रबलेन कवन्तस्यैव समासत्वात् उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् 'गोस्त्रियोः' इति ह्रस्वत्वाभावेन 'केऽणः' इति प्राप्तह्रस्वस्य 'न कपि' इति निषेधेन 'आपोऽन्यतरस्याम्' इति ह्रस्वे कपः प्राग्वर्तिखट्वशब्दात्परस्य आपः अभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्य 'अभाषितपुंस्काच्च' इति वैकल्पिकेत्त्वे विभक्तिकार्ये 'अखट्विका' 'अखट्वका' इति । ह्रस्वाभावे तु 'अखट्वाका' इति त्रिविधं रूपमत्र निर्बाधमिति दिक् ।

अनुपसर्जनात्-अधिकारोऽयमिति—अयम्भावः, 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधिप्रतिषेधे 'टिड्ढाणञ्—' इत्यस्य टिद्रूपं यत्प्रातिपदिकमित्यर्थे अवयवेऽचरितार्था अनुबन्धा समुदायस्योपकारका भवन्तीति बलात् कुरुचरीति सिद्धौ, अनुपसर्जनाधिकारः किमर्थः, 'बहुकुरुचरा' इत्यत्र तु न दोषः, 'यं समुदायं यो न व्यभिचरति स तस्योपकारको भवति' इति स्वीकारादिति वाच्यम्, 'स्त्रीप्रत्यये समासप्रत्ययविधौ प्रतिषेधः' इत्यस्याप्रवृत्तिज्ञापनेन चारितार्थ्यात् ।

वक्ष्यमाणा ( ई. ४२, ४५, ४७, ४९, ५७ )—ननु 'न ल्यपि' इति सूत्रारम्भसामर्थ्येन अनुबन्धकार्ये कर्तव्येऽनल्विधाविति निषेधाभावेन स्थानिवत्त्वात् टित्वधर्ममवलम्ब्य वक्ष्यमाणेत्यत्र ङीप् कथन्न स्यादिति चेत् न, याऽसुटो ङित्त्वेन लाश्रयमनुबन्धकार्यम् आदेशानां न भवतीति निषेधात् ।

न च 'पिच्च ङिन्न ङिच्च पिन्न' इति भाष्येण यासुटो ङित्त्वं तत्र सार्थकमिति वाच्यम् । 'हलः श्नः शानज्झौ' इति सूत्रे शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽपि 'अनल्विधौ' इति निषेधो भवतीति ज्ञापनात् । एवञ्चात्र स्थानिवद्भावो न भवतीति ङीपोऽप्रवृत्तिरिति भावः ।

पञ्चतयी ( ई. ४२ )—पञ्च अवयवाः यस्याः इति विग्रहे 'संख्याया अवयवे तयप्' इति तयपि 'टिड्ढाणञ्—' इति तयप्प्रत्ययान्तत्वात् ङीपि विभक्तिकार्ये 'पञ्चतयी' इति ।

इत्वरी ( ई. ४३, ५६, ५७ )—इण्धातोः 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरपि 'ह्रस्वस्य—' इति तुकि 'इत्वर' इति । तस्माद् इत्वरशब्दात् 'टिड्ढाणञ्—' इति ङीपि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'इत्वरी' इति ।

चौरी ( ई. ४८ )—चुरा शीलमस्या इति विग्रहे 'शीलं छत्रादिभ्यो णः' इति णप्रत्यये, वृद्धौ आकारलोपे 'ताच्छीलिके णेऽपि' इति वचनात् ङीपि चौरीति सिध्यति । उक्तवचने प्रमाणञ्च 'कार्मस्ताच्छील्ये' इति सूत्रम् । अन्यथा शीलार्थेऽणप्रत्यये प्रकृतिभावविधायकस्य 'अन्' इति सूत्रस्याप्रवृत्तौ 'नस्तद्धिते' इति सूत्रेणैव टिलोपे सिद्धे टिलोपनिपातनार्थं 'कार्मस्ताच्छील्ये' इति सूत्रं व्यर्थमेवेति दिक् ।

दैव्या ( ई. ३९ )—'क्वरपोऽयञश्च' इति संहितापाठेन 'अपत्यग्रहणं कर्तव्यम्' इति वार्तिकप्रत्याख्यानस्य फलैक्याय वार्तिके अपत्यपदम्—अपत्याधिकार-

-स्थपरम्, इत्यनुमीयते, तेन 'द्वीपे भवा द्वैप्या' इत्यत्र इव 'देवस्यापत्यं दैव्या' इत्यत्रापि 'यञश्च' इति ङीप् नेति। 'देवाद्यञञौ' इति हि यञ् प्राग्दीव्यतीयो न त्वप-त्याधिकारपठित इति तत्त्वविदः।

**गार्ग्यायणी** (ई. ४०,४७,६०)—यञन्तात् गार्ग्यशब्दात् 'प्राचां ष्फस्तद्धिते' इति ष्फप्रत्यये 'षप्रत्ययस्य' इति षस्येत्संज्ञालोपयोः 'यस्येति च' इत्यलोपे 'आय-नेयी'ति फस्यायन्नादेशे षित्त्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे 'उक्तार्थानामप्रयोगः' इति न्यायं बाधित्वा 'षिद्गौरादिभ्यश्च' इति ङीषि णत्वे विभक्त्यादिकार्ये 'गार्ग्यायणी' इति। पक्षे 'यञश्च' इति ङीपि अकारलोपे 'हलस्तद्धितस्य' इति यलोपे विभक्ति-कार्ये 'गार्गी' इति।

**लोहित्यादिः** ( ई. ४९ ) लोहित्यादिः गर्गाद्यन्तर्गणः।

**कात्यायनी** ( ई. ५४ )—कतस्यापत्यं स्त्री कात्यायनी। गर्गादियञन्तात् कात्यशब्दात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति नित्यं ष्फप्रत्यये षस्य इत्संज्ञायां लोपे च कृते फस्यायनि 'यस्येति च' इति यकारादकारस्य लोपे षित्वात् ङीषि विभक्ति-कार्ये 'कात्यायनी' इति।

**आसुरायणी** ( ई. ४८,६१ )—'प्राचां ष्फस्तद्धिते' इति सूत्रे तद्धितग्रहणात् क्वचिदन्यतोऽपि भवतीति ज्ञापनेन 'आसुरेरुपसंख्यानम्' इति सिद्धम्। तेन आसुरस्यापत्यं स्त्री इति विग्रहे आसुरशब्दात् ष्फप्रत्यये षस्येत्संज्ञायां लोपे च विहिते फस्यायन्नादेशे षित्वात् ङीषि णत्वे विभक्तिकार्ये आसुरायणी।

**त्रिलोकी** ( ई. ५० )—त्रयाणां लोकानां समाहारः इति विग्रहे समासनिष्प-न्नात् त्रिलोकशब्दात् 'द्विगोः' इत्यनेन ङीपि 'यस्येति च' इत्यलोपे विभक्तिकार्ये "त्रिलोकी' इति।

**पञ्चाश्वा** ( ई. ५५ )—पञ्चभिः अश्वैः क्रीतेति विग्रहे समासनिष्पन्नात् पञ्चा-श्वशब्दात् 'द्विगोः' इति ङीपि प्राप्ते 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धित-लुकि' इति निषेधे टापि 'यस्येति च' इत्यलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**द्विकाण्डी** ( ई. ४० )—द्वे काण्डे प्रमाणमस्याः इति विग्रहे 'तद्धितार्थ' इति समासे 'प्रमाणे द्वयसज्' इति विहितस्य मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुकि 'द्विगोः' इति ङीपि द्विकाण्डीति, रज्जुरिति शेषः। 'काण्डान्तात्क्षेत्रे' इति

ङीपो निषेधो न भवति, द्विकाण्डशब्दस्य क्षेत्रवृत्तित्वाऽभावात् ( षोडशहस्तप्रमाणो दण्डः काण्डमिति बोध्यम् । )

द्विपुरुषी ( ई. ५५ )—द्वौ पुरुषौ प्रमाणमस्याः इति विग्रहे 'तद्धितार्थ' इति द्विगुसमासे 'प्रमाणे द्वयसज्–' इति विहितस्य मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुकि 'द्विपुरुष' इति । तस्मात् स्त्रीत्वविवक्षायां 'पुरुषात् प्रमाणेऽन्यतरस्याम्' इति विभाषया ङीपि अलोपे विभक्तिकार्ये 'द्विपुरुषी' इति । पक्षे टापि 'द्विपुरुषे'ति ॥

अत्यूध्नी ( ई. ४१, ५२ )—अतिशयितमूधो यस्याः इति विग्रहे बहुव्रीहि-समासे सुब्लुगादिकार्ये यणि 'ऊधसोऽनङ्' इत्यनङि 'संख्याऽव्ययादेर्ङीप्' इत्यनेन ङीपि भत्वादल्लोपे प्रातिपदिकादिकार्ये 'अत्यूध्नी' इति । 'संख्याव्ययादे'रित्यत्र बहु-व्रीहिरित्यनुवर्तनात् ऊधोऽतिक्रान्तेति विग्रहे 'अत्यादयः' इति समासे तु अबहुव्रीहि-त्वात्–'अत्यूधाः' इत्येव स्यात् ।

भेषजी ( ई. ४१ )—भिषज इयमित्यर्थेऽणि आदिवृद्धिं प्रबाध्य 'केवल' इति सूत्रे 'भेषज' इत्युपादानादेव निपातनादेकारादेशे 'केवलमामकभागधेयपापापरसमा-नार्यंकृतसुमङ्गलभेषजाच्च' इति सूत्रेण ङीपि यस्येति चेत्यलोपे स्वादिकार्ये । 'भेषजी' इति सिद्धम् । संज्ञाछन्दसोरिति नियमादन्यत्र 'भेषजा' इति ।

मामक इति ( ई. ३७ )—मामकशब्दस्य स्त्रीलिङ्गे टापि विभक्तिकार्ये 'मामका' इत्येव भवति । तथा हि–ममेयमित्यर्थे 'तस्येदम्' इत्यणि 'तवकममके'ति ममकादेशे आदिवृद्धौ अणन्तत्वात् 'टिड्ढाणञ्–' इति ङीपि सिद्धे 'केवलमामक–' इति सूत्रे मामकग्रहणं व्यर्थं सत् नियमयति—'अणन्तान्मामकशब्दाद्यदि ङीप् स्यात्तर्हि संज्ञाछन्दसोरेवे'ति । तेन लोकेऽसंज्ञायां च 'मामके'ति ।

अन्तर्वत्नी (ई.३७) अन्तर्वत्–शब्दस्य स्त्रियाम् 'अन्तर्वत्नी इति । तथाहि— अन्तरस्त्यस्यां गर्भं इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतया अस्तिसामाना-धिकरण्याभावात् 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यनेन निपातनात् मतुपि 'अन्त-र्वत्पतिवतोर्नुक्' इति नुकि 'मादुपधायाश्च' इति मस्य वत्वे 'ऋन्नेभ्यो ङीप्' इति ङीपि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

दृढपत्नी ( ई. ४९ )—'विभाषा सपूर्वस्य' इति सूत्रे उत्तरत्रानुवृत्तयेऽनुवृत्तस्य 'अनुपसर्जनात्' इत्यस्य श्रुतत्वेन सपूर्वस्य पत्यन्तस्येति विशेषणात् दृढा पतिर्यस्येति

बहुव्रीहावपि नुकि 'ऋन्नेभ्यो ङीप्' इति ङीपि अलोपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**वृषलपत्नी ( ई. ४६ )**—वृषलस्य पतिः स्त्री इति विग्रहः । वृषलस्य यज्ञे अधिकाराभावेन 'पत्युर्नो यज्ञसंयोगे' इत्यस्याप्रवृत्तौ 'विभाषा सपूर्वस्य' इत्यनेनात्र नुकि 'ऋन्नेभ्यो ङीप्' इति ङीपि 'यस्येति चे'ति अलोपे विभक्तिकार्ये 'वृषलपत्नी' इति । पक्षे 'वृषलपतिः' इति ।

**वृषलस्य पत्नीति व्यस्ते**—अयम्भावः—वृषलस्य यज्ञेऽधिकाराभावेन 'पत्युर्नो यज्ञसंयोगे' इति सूत्राप्रवृत्तिः । समासाभावेन विद्यमानपूर्वत्वाभावात् 'विभाषा सपूर्वस्य' इत्यस्यात्र प्रवृत्तिरिति न शङ्कनीयम्, पत्नीव पत्नीति समाधानात् । यथा पाणिगृहीतीभार्यायां यज्ञाधिकारस्तथैव लक्षणया अस्या अपि यज्ञाधिकारः कल्पनीय इति 'पत्युर्नो यज्ञ' इति सूत्रेण सिद्धिः ।

**पूतक्रतायी ( ई. ५३ )**—पूतः क्रतुः येन सः पूतक्रतुः, तस्य स्त्रीत्यर्थे 'पूतक्रतोरै च' इति सूत्रेण ङीपि तकारादुकारस्यैकारे तस्य आयादेशे भत्वाद् अलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**अग्नायी ( ई. ४२ )**—अग्निशब्दात् 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इति सूत्रेण उदात्तैयादेशे ङीपि च कृते आयादेशे भत्वात् अलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**रोहिणी ( ई. ३३, ४९ )**—रक्तवर्णपर्यायात् रोहितशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यनेन ङीपि तकारस्य नत्वे च कृते णत्वे 'यस्येति च' इत्यलोपे प्रातिपदिकात् सौ सुलोपे उक्तं रूपं सिद्धम् ।

**'त्र्येण्या च शलल्या' इति गृह्यसूत्रम्**—अयम्भावः—'वर्णादनुदात्तात्—' इति सूत्रे 'अनुपसर्जनात्' इत्यस्य गृह्यमाण ( श्रुतवर्ण ) विशेषणत्वमेव युक्तम्, ननु तदन्तविधिलभ्यवर्णान्तविशेषणत्वमिति चेन्न, 'त्र्येण्या च शलल्या' इति गृह्यसूत्रस्याऽसङ्गत्यापत्तेः तथा हि—अनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वे सति त्रीणि एतानि अस्याः इति बहुव्रीहिनिष्पन्न 'त्र्येत' शब्दघटक 'एत' शब्दस्य वर्णवाचिनः उपसर्जनत्वात् ङीप्नत्वे न स्याताम् । वर्णान्तविशेषणत्वे तु त्र्येतशब्दस्य अनुपसर्जनत्वान्न दोषः इति ।

**श्येण्या च शलल्येति ( ई. ४३ )**—अयम्भावः—'वर्णादनुदात्तात्तोपधात्तो नः' इति सूत्रे अनुपसर्जनादित्यनुवृत्तस्य श्रुतवर्णविशेषणत्वमेव युक्तत्वेन एतानि = श्वेतानि, अवयवसंस्थानानि यस्याः इति बहुव्रीहौ निष्पन्नस्य श्येतशब्दस्य प्रथमैकवचने 'श्येणी' इति रूपं न स्यात्, तत्र एतशब्दस्य वर्णवाचिनः उपसर्जनत्वेन ङीवनत्वयोरभावात्। अतः 'श्येण्या च शलल्ये'ति सूत्रप्रामाण्येन अनुपसर्जनादित्यनुवृत्तस्य तदन्तविधिलभ्यवर्णान्तविशेषणत्वमेवेति तद्भावः।

**जानपदी ( ई. ३४ )**—जनपदे भवः जानपदः। तस्मात् 'जानपद—' इति सूत्रेण ङीषि भत्वादलोपे विभक्तिकार्ये 'जानपदी' इति। जानपदी, वृत्तिश्चेत् = जीविका गम्या चेदित्यर्थः। ननु उत्सादित्वादञन्तत्वेन 'टिड्ढाणञ्—' इति ङीपि सत्यपि 'जानपदी'ति सिद्धौ ङीष्विधानं किमर्थमिति चेन्न, ङीप्याद्युदात्तत्वम्, ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमित्युभयोर्भेदात्।

**अनड्वाही ( ई. ३९ )**—अनडुह्शब्दस्य गौरादिगणे पाठात् 'षिद्गौरादिभ्यश्च' इति ङीषि 'आमनडुहः स्त्रियां वा' इति वार्तिकेन आमि, यणादेशे विभक्त्यादिकार्ये 'अनड्वाही' आमभावे 'अनडुही' इति च बोध्यम्। (अनडुहः = वृषभस्य स्त्री, अनो वहतीति यौगिको वा अनड्वाही—अनडुहीति)।

**कुण्डी अमत्रं चेत्**—ननु जानपदेति सूत्रे अमत्रग्रहणेन कुण्डशब्दादमत्रे एव ङीष् नान्यत्रेति नियमेन, 'अमृते जारजः कुण्डः' इति कुण्डशब्दाज्जातिलक्षणो ङीष् कथमिति चेन्न; अमत्रेऽनुगतसंस्थानव्यंग्यरूपजातित्वाभावेनाप्राप्तौ नियमस्वासम्भवात्। स्त्रीविषयत्वादिति मूलस्य जातित्वाभावादित्यर्थं इति दिक्।

**नागी स्थूला चेत्**—ननु नागशब्दस्य जातिवाचकत्वेन जातेरिति ङीषिसिद्धे जानपदेति सूत्रे नागग्रहणं व्यर्थमिति चेन्न, इयं स्त्री नागी (हस्तिनी) स्थौल्यगुणयोगादित्यत्र नागशब्दस्यैकव्यक्तिवृत्तित्वेन जातिवाचकत्वाभावेनासिद्धेः। न चात्र स्थूलग्रहणं व्यर्थमिति वाच्यम्; इयं स्त्री नागा सर्पिणी दैर्घ्यगुणयोगादित्यत्र दोषापत्तेः।

**गोणी ( ई. ५६ )**—ओप्यते निक्षिप्यते अस्मिन्नित्यर्थे आङ्पूर्वकात् वपेर्ल्युट 'अवपनम्' इति। तस्मिन्नर्थे गोणशब्दात् 'जानपदे'ति ङीपि भत्वादलोपे विभक्तिकार्ये 'गोणी' इति।

भाजी ( ई. ५७ )—'यवागूरुष्णिका श्राणा' इत्यमरः। तस्मिन् श्राणार्थे भाजशब्दात् 'जानपदे'ति ङीपि भत्वादलोपे विभक्तिकार्ये 'भाजी' इति।

नीली ( ई. ३८ )—'जानपद' इति सूत्रेण अनाच्छादने नीलशब्दस्य ङीष्-विधाने नीला कुण्डी इत्यत्रापि ङीष् स्यादित्यत आह—'नीलादोषधौ' 'प्राणिनि च' नीलादनाच्छादनेऽपि भवन् ङीष् ओषधौ प्राणिनि चैव स्यात् न त्वन्यत्रेति वार्त्तिकार्थः। एवञ्च तत्रैव 'संज्ञायां वा' इत्यपि वार्तिकम्। संज्ञायामुक्तविषये तदन्यत्रापि ङीष् वा स्यादित्यर्थः। एवञ्च 'नीली-नीला' इति द्वयमपि साधु।

नागी स्थूला ( ई. ४३ )—अयम्भावः यादृशं स्थौल्यं गजे वर्तते तादृशमेव स्थौल्यं यदि भार्यायां विद्येत तदा स्थौल्यगुणस्य योगात्सम्बन्धाद्धेतोर्गजवाची नागशब्दः स्त्रियां प्रयुज्यते। एवञ्च स्थूलगुणविशिष्टा भार्या नागीति कथ्यते। अयमेव च नागीशब्द उदाहरणम्भवति। अथ च सर्पविषये यादृशं दैर्घ्यं वर्तते तादृशं दैर्घ्यं यदि कस्याञ्चित् भार्यायां स्यात्तदा तादृशस्य दैर्घ्यगुणस्य सम्बन्धात्सर्पवाचको नागशब्दो भार्यायां प्रयुज्यते। ततश्च नागा भार्या इति प्रत्युदाहरणं भवति।

उतः किं शुचिः ( ई. ५२ )—अयम्भावः—'वोतो गुणवचनात्' इति सूत्रे उत इति पदाभावेऽपि अत इत्यस्य सम्बन्धेनाकारान्तादेव ङीष् इति शुचिशब्देऽकारान्तत्वाभावेन ङीष् न स्यादिति न शङ्कनीयम्। 'खरुसंयोगोपधान्न' इति वार्तिकवैयर्थ्यात्।

रात्रिः ( ई. ४७ )—औणादिकरात्रिप्रत्ययान्तात् 'कृदिकारादक्तिनः' इति बह्वाद्यन्तर्गणसूत्रात् विभाषया ङीषि भत्वादिकारलोपे विभक्तिकार्ये 'रात्री' इति। पक्षे 'रात्रिः' इति भवति।

पद्धतिः ( ई. ५२ )—पादाभ्यां हतिः इति विग्रहे तृतीयासमासे सति 'हतकाषिहतिषु च' इति सूत्रेण पादशब्दस्य पदादेशे पूर्वसवर्णे च कृते पद्धतिशब्दो निष्पन्नः। तस्मात् क्तिन्नन्तात् 'सर्वतोऽक्तिन्नर्थादित्येके' इत्यनेन ङीषि अप्राप्तौ बह्वादिगणे पद्धतिशब्दो पठ्यते। तेनात्र 'बह्वादिभ्यश्च' इति ङीषि भत्वादिलोपे विभक्तिकार्ये 'पद्धती' इति। पक्षे 'पद्धतिः' इति भवति।

पुंयोगादिति ( ई. ४१ )—इह पुमिति लुप्तषष्ठीकं पृथक् पदं, तच्चावर्तते। पुंयोगादिति हेतौ पञ्चमी। आख्यायामिति तु पञ्चम्यर्थे सप्तमी तथा च या पुमाख्या ( पुंवाचकः शब्दः ) पुंयोगात् स्त्रियां वर्तते ततो ङीष् स्यादित्यर्थः।

गोपालिका ( ई. ४५ )—गाः पालयतीति गोपालः, गोपाल एव गोपालकः, तस्य स्त्री गोपालिका । अत्र 'पुंयोगादाख्यायाम्' इत्यनेन ङीष्प्राप्ते 'पालकान्तान्न' इति निषेधे टापि 'प्रत्ययस्थात्—' इति इत्त्वे भत्वादल्लोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

सुरी ( ई. ४८ )—सूर्यशब्दात् स्त्रीत्वविवक्षायां 'षिद्गौरादिभ्यश्च' इति गौरादित्वात् ङीषि 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इत्यनेन यकारस्य 'यस्येति च' इति अकारस्य च लोपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् । इयं सूरी=कुन्ती, मानुषी न तु देवता । तेन 'सूर्याद्देवतायामि'त्यनेन 'चाप्' न भवति ।

उपाध्याया ( ई. ५६ )—अत्र 'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः' इपि वार्तिकेन ङीषि भत्वादल्लोपे विभक्तिकार्ये 'उपाध्यायी' इति । पक्षे टापि 'उपाध्याया' इति च भवति । 'उपाध्यायस्य स्त्री' इति विग्रहे तु पुंयोगे ङीषि, आनुकि च सति 'उपाध्यायानी—उपाध्यायी' इति भवति ।

ब्रह्माणी (ई. ६०)—ब्रह्माणम् आनयति=जीवयति इति विग्रहे ण्यन्तात् 'अन्' धातोः 'कर्मण्यण' इत्यणि 'णेरनिटि' इति णिलोपे 'आन' शब्देन ब्रह्माणमित्यस्य उपपदसमासे सुब्लुकि नलोपे सवर्णदीर्घे 'ब्रह्मन्' शब्दात् 'टिड्ढाणञ—' इति ङीषि 'यस्येति च' इत्यकारलोपे 'पूर्वपदात् संज्ञायाम्' इति णत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् । 'इन्द्रवरुण—' इति सूत्रे 'ब्रह्मन्' शब्दस्याग्रहणात् ब्रह्मणः स्त्री इत्यर्थे 'ब्रह्माणी' कथमिति प्रश्ने आह—कथं ब्रह्माणीति ।

वस्त्रक्रीती ( ई. ५० )—अत्र 'क्रीतात् करणपूर्वात्' इति सूत्रेण ङीषि भत्वादल्लोपे विभक्तिकार्ये 'वस्त्रक्रीती' इति । ननु 'वस्त्रेण क्रीता' इति विग्रहे समासे सति अदन्तत्वाऽभावात् कथं ङीष् इति चेन्न, 'वस्त्र टा क्रीत' इति स्थिते 'गतिकारके'ति परिभाषया सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे सुब्लुकि वस्त्रक्रीतेति प्रातिपदिकस्य अदन्तत्वनिषेधादिति भाष्ये स्पष्टम् ।

धनक्रीता—ननु 'वस्त्रक्रीती' इतिवदत्रापि ङीष् कुतो नेति चेन्न, 'कर्तृकरणे कृता बहुलम्' इति सूत्रे बहुलग्रहणेन 'गतिकारकेति' परिभाषया अनित्यत्वज्ञापनात् सुबन्तेन समासात् पूर्वमेव धनेन क्रीतमित्यर्थे टापि ततः सुपि समासेऽदन्तत्वाऽभावात् 'क्रीतात्करणपूर्वात्' इत्यस्याप्राप्तेः ।

अभ्रलिप्ती (ई. ४२)—अभ्रैरल्पैरीषद्वा आच्छन्नेत्यर्थः। अत्र 'क्वादल्पाख्यायाम्' इति ङीषि भत्वादकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

ऊरुभिन्नी (ई. ४३, ४४)—भिन्नौ असंयुक्तौ ऊरू यस्याः सेति विग्रहः। अत्र 'बहुव्रीहेश्चान्तोदात्तात' इति सूत्रेण ङीषि भत्वादकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

अतिकेशी (ई. ५०, ५५)—केशानमतिक्रान्तेति विग्रहे समासे सुब्लुकि 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीषि टिलोपे विभक्तिकार्ये 'अतिकेशी' इति।

अद्रवं मूर्तिमत्स्वाङ्गं, प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम्॥

स्वाङ्गाच्चोपसर्जनात (ई. ४२, ५१, ५३)—इति सूत्रे 'स्वाङ्गपदेन स्वस्य=अवयवीभूतस्य, अङ्गं स्वाङ्गम्' इति कथने 'सुमुखा शाला' इत्यत्राऽपि ङीष् स्यात्-मुखस्य शालाङ्गत्वात्। किञ्च 'सुकेशी रथ्या' इत्यत्र ङीष् न स्यात्–केशानां प्राण्यङ्गत्वाऽभावात्। तस्माद्व्याप्त्यतिव्याप्तिवारणाय उक्तसूत्रे 'अद्रवमि'त्यादिना त्रिविधं स्वाङ्गं गृह्यते।

(१) 'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्'=न विद्यते द्रवो यस्य तद् अद्रवम्, अतः सु=शोभनः, स्वेदः=घर्मजः—उदकप्रस्रवो यस्याः सा 'सुस्वेदा' इत्यत्र ङीष् न। मूर्तिमत् = स्पर्शवद् द्रव्यपरिमाणं मूर्तिस्तद्वत्। अत एव 'सुज्ञाना' इत्यत्र ङीष् न। प्राणिस्थम्=प्राणिनि–प्राणवति जन्तौ विद्यमानम्। अतः 'सुमुखा शाला' इत्यत्र ङीष् न। अविकारजम्=रोगादिविकाराजन्यम्। अतः सु=अधिकः, शोफः=श्वयथुः, यस्याः सा 'सुशोफा' इत्यत्र ङीष् न।

(२) अतत्स्थं तत्र दृष्टं च=अतत्स्थं=सम्प्रति अप्राणिस्थमपि, च = किन्तु, तत्र=प्राणिनि, दृष्टं=दृश्यमानं, यत्तदपि स्वाङ्गमित्यर्थः। अतः 'सुकेशी रथ्या' इत्यत्र ङीष् सिद्धः। रथ्यायां=वीथ्यां, विकीर्णः केशः सम्प्रति अप्राणिस्थत्वेऽपि कदाचित् प्राणिस्थत्वादिति भावः।

(३) तेन चेत्तत्तथा युतम्=येनाङ्गेन प्राणिरूपं वस्तु यथायुतं, तेन तत्सदृशेन अङ्गेन सद्=अप्राणिरूपं वस्तु, तथा प्राणिवत्, युतं=युक्तं चेत्=स्यात्, तदपि प्राणिनि दृष्टं स्वाङ्गमित्यर्थः। अत एव 'सुस्तनी प्रतिमा' इत्यत्र ङीष् सिद्धः।

तुङ्गनासिकी (ई. ४०, ४६)—अत्र 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति सूत्रेण प्राप्तङीषः 'न क्रोडादिबह्वचः' इत्यनेन निषेधे प्राप्ते तं प्रबाध्य 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' इत्यनेन ङीषविकल्पे 'तुङ्गनासिकी' अभावपक्षे 'तुङ्गनासिका' इति च बोध्यम् । नन्वेवं बह्वच्लक्षणस्य निरवकाशत्वापत्तिरिति चेन्न, सुजघनेत्यादौ सावकाशत्वात् । नन्वेवं 'सहनञ्विद्यमानपूर्वाच्च' इति निषेधस्य सकेशा, इत्यादौ सावकाशत्वेन 'सहनासिका' 'सहोदरा' इत्यादावप्यनेन ङीष्विकल्पः स्यादिति वाच्यम् । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' इति न्यायेन 'न क्रोडादिबह्वचः' इत्यस्यैव बाधसम्भवात् । तुङ्गः=उन्नतः । एवञ्च उन्नता नासिका यस्याः सेत्यर्थः ।

सुजघना ( ई. ४६, ५६ )—सु=शोभनं, जघनं यस्याः इति विग्रहे स्त्रीत्वविवक्षायां 'स्वाङ्गाच्चोपसर्जनाद्' इति सूत्रेण प्राप्तं ङीषं 'न क्रोडादिबह्वचः' इत्यनेन बह्वच्कत्वान्निषेधे अदन्तत्वाट्टापि विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

जातेरस्त्रीति (ई. ४२, ५४)—'जातेरस्त्रीविषयात्' इति सूत्रे जातिपदेन त्रिधा जातिर्गृह्यते । तत्र प्रथमलक्षणम्—'आकृतिग्रहणा जातिः' इति । आकृतिः—अवयवसन्निवेशविशेषः । ईदृशाकारो गौरित्युपदिष्टे पुच्छलाङ्गूलाद्याकृतिनिर्देशेन गवादिषु जातिर्गृह्यते, तदा ह्यनुगतेऽपि अनुगतमेकाकारेण प्रतीतं यत्संस्थानम् अवयवसन्निवेशः, तेन व्यङ्ग्या या सा जातिरित्यर्थः । तथाहि—नद्यादीनां जलसमीपदेशो यत्र यत्र वर्तते, तत्र तत्र तट इति बुद्धिर्जायते, इति तटशब्दादपि जातिलक्षणो ङीष् भवति । परञ्च एतत् लक्षणं वृषलत्वादीनां जातित्वे साधकं न भवति । यथा—हस्ताद्यवयवसन्निवेशो यथा ब्राह्मणादीनां वर्तते, तथा शूद्रस्यापि इति प्रथमलक्षणेन न गतार्थत्वम्, अत उच्यते—'लिङ्गानाञ्च न सर्वभाक्' इति । एकस्यां ब्राह्मणादिव्यक्तौ एकवारं कथनात्=उपदेशात्, द्वितीयव्यक्तौ कथनं विनापि जातेर्ज्ञानं सुलभमिति वृषलत्वादीनां सिद्धिः । ननु एताभ्याम् औपगवी कठीत्यादेरसंग्रहः, अनुगतसंस्थानव्यङ्ग्यत्वाभावात्, सर्वलिङ्गत्वाच्चेति चेद् ? उच्यते—'गोत्रं च चरणैः सह' इति । अपत्यप्रत्ययान्तः चकारात् शाखाध्येतृवाची चशब्दो जातिकार्यं लभत इत्यर्थः । एवम् 'औपगवी' 'कठी' इत्यादेः सिद्धिरिति दिक् ।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥

भाष्योक्तं त्रिविधं जातिलक्षणं प्रपञ्चयति—आकृतिग्रहणेति। गृह्यते इति ग्रहणम्, आकृतिः ग्रहणं यस्याः सा 'आकृतिग्रहणा जातिः' अनुगतसंस्थानव्यङ्ग्येत्यर्थः।

उदाहरणं तु तटी, घटी, इत्यादि। जलसमीपप्रदेशः आकृतिविशेषविशिष्टस्तटः, अतस्तटत्वमाकृतिव्यङ्ग्यत्वाज्जातिः, तेन तटशब्दस्य जातिवाचकत्वाद् अनियतस्त्रीलिङ्गत्वाद् अयोपधत्वाच्च 'जातेरस्त्री'ति ङीष्।

नन्वेवं प्रथमलक्षणस्वीकारे वृषलत्वादीनां जातित्वं न स्यात्, तदवयवसन्निवेशस्य ब्राह्मणादिसाधारणत्वेन वृषलत्वादीनां तद्व्यङ्ग्यत्वादित्याशङ्क्य द्वितीयलक्षणमाह—'लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या' इति। असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरित्यर्थः। उदाहरणं 'वृषली' इति। एकस्यां व्यक्तौ वृषलत्वे उपदिष्टे सति तदपत्यसोदरादिषु तदुपदेशं विना तस्य सुग्रहत्वात् सकृदाख्यातनिर्ग्राह्या चेति 'जातेरस्त्री'ति ङीष्।

नन्वेवमपि औपगवी, कठी इत्यादौ औपगवादेरनुगतसंस्थानव्यङ्ग्यत्वाभावात्, सर्वलिङ्गत्वाच्चेत्युभयविधिजातित्वात् ङीष् न स्यादिति तृतीयं लक्षणमाह—'गोत्रं च चरणैः सह' इति। अत्र लक्षणे गोत्रशब्देन अपत्यं विवक्षितम्, नतु पौत्रप्रभृतीति, व्याख्यानात्। चरणशब्दस्तु शाखाध्येतरि प्रसिद्धः। तथा च अपत्यप्रत्ययान्तः चकारात् शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः। तत्र प्रथमं गोत्रोदाहरणम् 'औपगवी' इति। उपगोरपत्यं स्त्रीति विग्रहे 'तस्यापत्यमि'त्यणि वृद्धौ गुणेऽवादेशे 'जातेरस्त्री'ति ङीष्। द्वितीयं चरणोदाहरणं कठेन प्रोक्तमधीयाना 'कठी' इति।

कुरूः ( ई. ३३ )—कुरुक्षेत्रस्य राजा कुरुः तस्यापत्यं स्त्रीत्यर्थः। 'गोत्रं च चरणैः सह' इति जातित्वे 'ऊङुतः' इति कुरुशब्दात् ऊङि सवर्णदीर्घे स्वाद्युत्पत्तिः।

करभोरूः ( ई. ३२ )—करभाविव ऊरू यस्या इति विग्रहः। करभोरुशब्दस्य 'आकृतिग्रहणे'ति त्रिविधजातित्वाऽभावात् 'ऊङुतः' इत्यस्याप्राप्त्या 'ऊरूत्तरपदादौपम्ये' इति ऊङि सवर्णदीर्घे स्वाद्युत्पत्तिः।

हयी ( ई. ४४ )—अत्र हयशब्दस्य योपधत्वात् 'जातेरस्त्री'ति ङीषोऽप्राप्त्या 'योपधप्रतिषेधे हयगवय—' इति वार्तिकबलात् ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

वृषली ( ई. ३४. ४८, ५० )—वृषलशब्दात् स्त्रीत्वविवक्षायां 'जातेरस्त्रीविषयादयोपधात्' इत्यनेन ङीषि भत्वादलोपे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। जातित्वं चात्र 'लिङ्गानाञ्च न सर्वभाक्' इति।

औपगवी ( ई. ३४, ५५, ५६ )—उपगोरपत्यं स्त्रीत्यर्थे अपत्यार्थेऽणि वृद्धौ अवादेशे गोत्रप्रत्ययान्तस्यापि जातित्वस्वीकारात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीषि 'यस्येति च' इत्यलोपे सुलोपे उक्तं रूपं सिद्धम्।

मुकयी ( ई. ४२ )—चतुष्पाज्जातिविशेषस्य संज्ञेयम्। अत्र 'अयोपधात्' इति प्रतिषेधात् ङीषप्राप्तौ 'योपधप्रतिषेधे हयगवय—' इति वार्तिकेन ङीषि भत्वादलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

अलाब्वा ( ई. ४८ )—अलाबूशब्दात् स्त्रीत्वविवक्षायाम् 'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्' इति वार्तिकेन ऊङि सवर्णदीर्घे अलाबूशब्दो निष्पन्नः। तस्मादलाबूशब्दात् टायां यणादेशे 'अलाब्वा' इति। ( अलाबूशब्दस्य दीर्घान्तत्वेऽपि 'नोङ्धात्वो'रिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम्। )

शफोरूः ( ई. ४३ )—शफौ = खुरौ, ताविव संश्लिष्टौ ऊरू यस्याः इति विग्रहे निष्पन्नात् शफोरुशब्दात् 'संहितशफलक्षणवामादेश्च' इत्यनेन ऊङि सवर्णदीर्घे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्।

सहोरूः ( ई. ४५ )—'सहितसहाभ्यां चेति वक्तव्यम्' इति वार्तिकेन ऊङि सवर्णदीर्घे गुणे प्रातिपदिकादिकार्ये 'सहोरूः' इति। नच सहशब्दस्य विद्यमानत्वे 'सहोरूः' इत्यस्य सहशब्दप्रयोगो व्यर्थ इत्यत आह कौमुद्यां सहेते ( रतिकालिकमर्दनम् ) इति सहौ, ऊरू यस्याः सा 'सहोरूः' इति। किञ्च विद्यमानवचनत्वेऽपि सहशब्दस्य न वैयर्थ्यम्। ऊर्वतिशयप्रतिपादनाय प्रयोगात्।

वैदी ( ई. ई. ४० )—विदस्यापत्यं स्त्रीत्यर्थे 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञि कृते गोत्रत्वेन जातित्वान्ङीषि प्राप्ते 'शार्ङ्गरवाद्यञो ङीन्' इति सूत्रेण ङीनि अल्लोपादिकार्ये 'वैदी' इति सिद्धम्।

नारी (ई. ४३, ४७, ५८)—नृ—नरशब्दयोरुदाहणं नारीति। तत्र नृशब्दात् 'नृनरयोर्वृद्धिश्च' इति गणसूत्रेण चकारात् ङीन्विधानेन पूर्वं ङीनि वृद्धौ रपरत्वे च 'नारी' इति। एवं नरशब्दात् पूर्वं ङीनि यस्येतिलोपे नकारादकारस्य वृद्धौ नारीति। न च यस्येति लोपात् प्रागलोन्त्यपरिभाषया नरशब्दान्ताकारस्य वृद्धिः कुतो नेति

वाच्यम्। 'वार्णादाङ्गं बलीयः' इति परिभाषाबलेन अन्त्यस्याकारस्य यस्येतिलोपे नापहारात्। केचित्तु, नरस्य—अः नरः, ना च नरश्च तयोः नृनरयोः इति प्रश्लेषसामर्थ्यान्नकाराकारस्यैव वृद्धिः स्यादित्याहुः। न च नृशब्दात् पूर्वोक्तप्रकारेण नारीति सिद्धौ नरग्रहणं व्यर्थमिति वाच्यम्, नरत्वजातिवाचिनो नरशब्दात् स्त्रियां जातिलक्षणङीषि नरीति व्यावृत्त्यर्थं तस्यावश्यकत्वात्। वृद्धिविधानार्थं गणसूत्रमेतदिति बोध्यम्। 'नारी सीमन्तिनी वधूः' इत्यमरः।

कारीषगन्ध्या (ई. ४१, ४३, ४८)—करीषं गवादिपशुपुरीषं तस्य गन्ध इव गन्धो यस्य स करीषगन्धिः। करीषगन्धेः गोत्रापत्यं स्त्रीत्यर्थे अणि तस्य 'अणिञोरनार्षयोः' इति ष्यङादेशे 'यस्येति' च इतीकारलोपे 'यङश्चाप्' इति चापि भत्वादकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

बहुयुवा (ई. ४९)—बहवो युवानो यस्यामिति विग्रहे निष्पन्नस्य बहुयुवञ्छब्दस्य उपसर्जनत्वेन 'यूनस्तिः' इत्यनेन तिप्रत्ययाभावे 'डाबुभाभ्याम्' इति डापि विभक्त्यादिकार्ये उक्तं रूपं सिद्धम्। नान्तलक्षणङीप् तु न, 'अनो बहुव्रीहेः' इति निषेधात्।

टिड्ढाणञ्—अत्र सूत्रे टित्वन्तु प्रातिपदिकस्य क्वचित् प्रत्ययकृतं, क्वचिच्च प्रकृतिकृतम्। तत्राद्यस्योदाहरणं 'कुरुचरी' इति। द्वितीयस्योदाहरणं नदट्—नदी। देवट्-देवी इति। पचादिषु 'नदट्—देवट्' इत्यनयोः पाठात् स्वत एव टित्वमिति ताभ्यां ङीपि 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'नदी' 'देवी' इत्युभयं सिद्धं भवति (घेटष्टित्वात् ङीपि 'स्तनन्धयी' इत्युदाहरणान्तरं तु कृदन्ते मृग्यम्।)

सौपर्णेयी (ई. ३१)—सुपर्णाया अपत्यं स्त्री इति विग्रहे सुपर्णाशब्दात् 'स्त्रीभ्यो ढक्' इति ढकि ढस्य एयादेशे 'यस्येति च' इति टिलोपे 'किति च' इति वृद्धौ 'सौपर्णेय' इति। तस्मात् सौपर्णेयशब्दात् 'टिड्ढाऽणञ्—' इति ङीपि 'यस्येति च' इति टिलोपे विभक्तिकार्ये 'सौपर्णेयी' इति।

ऐन्द्री (ई. ३४)—इन्द्रो देवताऽस्येति विग्रहे 'साऽस्य देवता' इत्यणि वृद्धौ टिड्ढाणञ—' इति ङीपि भत्वादलोपे विभक्तिकार्ये 'ऐन्द्री' इति।

गार्गी—(ई. ५५)—गर्गस्याऽपत्यं स्त्रीति विग्रहे 'गर्गादिभ्यो यञ्' इति गर्गशब्दात् यञि आदिवृद्धौ भत्वादलोपे 'गार्ग्य' इति। तस्मात् स्त्रीत्वविवक्षायां 'यञश्च' इति ङीपि भत्वादलोपे 'हलस्तद्धितस्य' इति यलोपे विभक्त्यादिकार्ये तत्सिद्धिः।

कुमारी (ई. ५६)—बाल्यवाचकात् कुमारशब्दात् स्त्रीत्वविवक्षायां 'वयसि प्रथमे' इति ङीपि अनुबन्धलोपे भसंज्ञायां 'यस्येति च' इत्यलोपे प्रातिपदिकत्वात् सौ 'हल्ङ्याब्भ्यः' इति सुलोपे तत्सिद्धिः।

एनी (ई. ३०)—एतशब्दः श्वेतपर्यायः, तस्मात् स्त्रीत्वविवक्षायां 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीपि तकारस्य नकारे च कृते भत्वाद् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'एनी' इति। पक्षे अदन्तत्वाट्टापि 'एता' इत्येव। ङीबभावे नत्वमपि न भवति, ङीपा सन्नियोगशिष्टत्वादिति तत्त्वविदः।

इन्द्राणी (ई. ५६)—इन्द्रस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि सिद्धेऽपि 'इन्द्रवरुण—' इत्यादिसूत्रेण ङीष्सन्नियोगेन आनुगागमे च जाते 'उकारस्योच्चारणार्थत्वेन दर्शनाऽभावे ककारस्येत्संज्ञायां लोपे च कृते सवर्णदीर्घे णत्वे विभक्तिकार्ये तत्सिद्धम्।

हिमानी—महद्धिममिति विग्रहे हिमशब्दात् 'हिमारण्ययोर्महत्त्वे' इति वार्तिकेन ङीषि आनुगागमे च जाते अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

अर्याणी (ई. ३८)—अर्यशब्दात् स्त्रीत्वविवक्षायाम् 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति वार्तिकेन ङीषि आनुकि च कृते भत्वादलोपे णत्वे विभक्तिकार्ये 'अर्याणी' इति। पक्षे टापि 'आर्या' इति। स्वामिनी वैश्या वेत्यर्थः। पुंयोगे तु अर्यस्य स्त्री—'अर्यी' इति भवति।

द्विविस्ता (ई. ४४, ५४)—द्वौ विस्तौ पचतीति विग्रहे 'तद्धितार्थे'ति द्विगुसमासे ठनि 'अध्यर्ध' इति ठनो लुकि 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इत्यस्य 'द्विगोः' इति ङीपि प्रतिषिद्धे अदन्तत्वात् टापि विभक्त्यादिकार्ये 'द्विविस्ता' इति।

कुण्डोध्नी (ई. ४७, ५६, ५७)—कुण्डमिव ऊधो यस्याः इति विग्रहे समासे सुब्लुकि गुणे 'ऊधसोऽनङ्' इत्यनङि 'बहुव्रीहेरूधसो—' इति ङीषि 'अल्लोपोऽनः' इत्यल्लोपे विभक्तिकार्ये 'कुण्डोध्नी' इति।

मनायी (ई. ४७, ५२, ५५)—मनोः स्त्री = मनावी, मनायी, मनुः। 'मनो रौ वा' इति सूत्रेण ङीप्सन्नियोगशिष्टेन औकारान्तादेशे आवि विभक्तिकार्ये 'मनावी' इति। ङीप्सन्नियोगसिष्टेनैकारादेशे आयादेशे विभक्तिकार्ये 'मनायी' इति। पक्षे तु 'मनुः' इति भवति।

**मातुली** ( ई. ३६ )—मातुलस्य स्त्रीति विग्रहे 'मातुलोपाध्याययोरानुग्वा' इति वार्तिकेन विकल्पेन आनुकि ङीषि च कृते 'मातुलानी' इति सिद्ध्यति । अत्र आनुगभावपक्षेऽपि ङीष् भवत्येवेति । तेन 'मातुली' इति च सिद्ध्यति ।

**कवरपुच्छी** ( ई. ३४ )—कवर इव पुच्छं यस्याः सा 'कवरपुच्छी' । 'कवरमणिविषशरेभ्यो नित्यम्' इति वार्तिकेन नित्यं ङीष् ।

**शूर्पणखा** ( ई. ५१ )—'शूर्पणखा' नाम राक्षसीति रामायणे प्रसिद्धा । शूर्पाणीव कररुहाः यस्या इति अस्वपदविग्रहः । संज्ञात्वेन नित्यसमासत्वात् 'नखमुखात् संज्ञायाम्' इति ङीषनिषेधे सति 'पूर्वपदात् संज्ञायामगः' इति णत्वे सुबाद्युत्पत्तिः । यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते, न तु संज्ञा, तदा असंज्ञात्वात् न ङीब्निषेधो न वा णत्वं भवति ।

**श्वश्रूः** ( ई. ४५, ४६ )—श्वशुरस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि तमपवाद्य 'श्वशुरस्योकाराकारयोर्लोपश्च' इति वार्तिकेन ऊङि तत्सन्नियोगेन रेफादकारस्य शकारादुकारस्य च लोपे विभक्तिकार्ये 'श्वश्रूः' इति ।

**शार्ङ्गरवी** ( ई. ३० )—शृङ्गरुशब्दादपत्येऽणि आदिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशे 'शार्ङ्गरव' इति तस्मात् जातित्वान्ङीषि प्राप्ते तम्प्रबाध्य 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः ।

**नारी** (ई०४०,५८,६०)—नृशब्दात् 'ऋन्नेभ्यः' इति ङीपि प्राप्ते तं प्रबाध्य 'नृनरयोर्वृद्धिश्च' इति ङीनि वृद्धौ च कृते रपरत्वे विभक्तिकार्ये 'नारी' इति । नरशब्दादपि जातिलक्षणे ङीषि प्राप्ते तम्बाधित्वाऽनेन भत्वादलोपे विभक्तिकार्ये 'नारी' इति भवति ।

**युवतिः** ( ४५, ४९, ५१ )—युवन्शब्दात् स्त्रीत्वविवक्षायां 'यूनस्तिः' इति तिप्रत्यये 'स्वादिष्वि'ति पदत्वान्नलोपे विभक्तिकार्ये 'युवतिः' इति । दीर्घेकारान्तोऽपि स्त्रियां वर्तते । तत्तु युधातोर्लटः शतरि शपो लुकि उवङि उगित्वात् ङीपि 'युवती' इति । ( यौति=पत्या सह आत्मानं मिश्रीकरोतीत्यर्थः ) ।

इति स्त्रीप्रत्ययप्रकरणम् ।

इति दरभङ्गामण्डलान्तर्गत 'तरौनी' ग्रामवासिश्रीमदनन्तलालझाशर्मात्मजश्रीरामचन्द्रझासम्पादिता प्रश्नोत्तरी समाप्ता ।

# प्रश्नपत्राणि

## स्त्रीप्रत्ययान्तभागे प्रश्नाः

### १६५१

१ 'लण्सूत्रेऽकारश्च' 'एदैतोरोदौतोश्च न मिथः सावर्ण्यम्' अनयोर्वाक्ययोरेकतरस्याशयं फलप्रमाणप्रदर्शनपूर्वकं विलिख्य 'स्वं रूपं शब्दस्याशब्दसंज्ञा' 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' अकृतव्यूहाः पाणिनीयाः' एषु कयोश्चिद् द्वयोः प्रयोजनं लिखत। ८

२ 'हरी एतौ' इत्यत्र ह्रस्वसमुच्चितप्रकृतिभावाभावे, 'सोऽहमाजन्मशुद्धानाम्' इत्यत्र सुलोपाभावे वा कारणं प्रदर्श्य गव्यूतिः, उपेडकीयति, पटत्पटेति, पुंख्यानम्, चेच्छिद्यते, चतुष्कपालः, अहोरात्रः—एषु केचन चत्वारोऽर्थनिर्देशपुरःसरं साधनीयाः। १०

३ 'यस्मात्प्रत्ययविधिः' इति सूत्रे तदादिग्रहणस्य फलमभिधाय, वर्णाश्रमेतरकाः, यूष्णः, सुसखिना, प्ररीणाम्, युक्, अतिस्वाकम्—एषु चतुरः साधयत। अथवा—प्रियास्त्रयस्त्रीणि वा यस्या इति विग्रहे तिस्रादेशो भवति न वेति सकारणं विविच्य, दुर्धियः, सखीयतीति सखा, अतिस्त्रियै, अमुमुईचः, तक्, असुकः, एषु कांश्चिच्चतुरः साधयत। १२

४ असृक्, स्वाम्पि, विसृपः, अतिधीवरो, अखट्विका, अन्तर्वत्नी, जानपदी, युवती एषु चतुरः संसाध्य 'स्वाङ्गाच्चे'ति सूत्रस्थं स्वाङ्गलक्षणं लिखत। १०

### १६५२

१ अ-इ-उ एषां वर्णानां प्रत्येकमष्टादशभेदान् सयुक्तिकमुपपाद्य, विश्वपाभिरित्यत्र ढत्वं कथन्नेति शंका समाधेया। ७

२ गव्यूतिः, तवल्कारः, प्रोढवान्, प्रार्च्छति, उपेडकीयति, शिवेहि, शुश्लोकेति, चतुर्मुखः, वाग्घरिः, सम्छ्भुः, संस्कर्ता, शिवच्छाया, हरिस्फुरति, शिवोऽर्च्यः, अहर्पतिः एषु यथेच्छं दश प्रयोगान् विशेषसूत्रनिर्देशपुरस्सरं संसाध्य, ईदूतौ च सप्तम्यर्थे इति सूत्रे अर्थग्रहणस्य प्रयोजनं स्फुटीकुरुत। १५

३ रमाः, सर्वे, दतः, यूष्णः, व्यह्नि, सुसखिना, उड्डुलोमाः, क्रोष्टुः, निट्सु, एषु सप्त संसाध्य, प्रियास्तिस्रो यस्य इति विग्रहे कीदृशं रूपम्। १०

४ अजरांसि, प्ररीणाम्, अनड्वान्, प्रियाष्टनः, अदमुयङ्, अतिवयम्, तक्, सेदुषः अमुष्याः, विमलदिवी, बेभिदि—एषु अष्ट साधनीयाः।

अथवा—श्रीपाय, प्रराभ्याम्, आभ्याम्, वृत्रघ्नः, मघवान्, युष्माकम्, गोमान्, षण्णाम्, तट्, अनया, स्वाम्पि, पिपठिषि, एषु अष्ट साधनीयाः। ८

५ पञ्चाजी, पञ्च, सनाथी, सुकेशी, अखट्विका, पद्धतिः, कार्यविशेषप्रदर्श्य वोतो गुणवचनादितिसूत्रे उतः किम् शुचिरिति फक्किका व्याख्यायताम्। १०

## १९५३

१ अ अ इति सूत्रप्रयोजनं प्रदर्श्य, स्वं रूपं शब्दस्याशब्दसंज्ञा, विरामोऽवसानम्, अचश्च, अस्थानेऽन्तरतमः, स्वरितेनाधिकारः, अदर्शनं लोपः, एषु केषाञ्चिच्चतुर्णां सप्रयोजननिर्देशमर्थां लेख्याः । १०

२ लाकृतिः, प्रष्ठौहः, दशार्णः, हरी एतौ, तच्छिवः, आच्छादयति, एषु चतुरः संसाध्य 'चतुष्कपाल' इत्यत्र षत्वविकल्पः संभाव्यते न वेति । १०

३ 'ङ्याप्प्रातिपदिकात्, इति सूत्रे ङ्याब्ग्रहणफलमभिधाय निर्जरसौ, यूष्णि, ग्रामणीः, सुसखा, उड्डुलोमान्—एषु चत्वारः साधु साधनीयाः । १०

४ गमुल्, अतिस्रेः, अजरांसि, सानूनि, तुराषाट्, अवंतः, अतित्वम्, चिकीर्षुः, उष्णिक्षु, अमुष्यै—एषु यथेच्छं पञ्च साधनीयाः । १०

५ असानि, गवाक्षु, सुपुंसी, पिबध्यै, अतिसुत्वरी, अधित्यका, पूतक्रयाती, केषाञ्चिच्चतुर्णामर्थनिर्देशं सिद्धिं प्रदर्श्य स्वाङ्गत्वन्निरूप्यताम् । १०

## १९५४

१ नाज्झलौ—इतिसूत्रप्रयोजनमभिधाय तपरस्तत्कालस्य, येन विधिस्तदन्तस्य दीर्घञ्च, तस्मादित्युत्तरस्य, सर्वत्र शाकल्यस्य, अन्तादिवच्च, एषु केषाञ्चिच्चतुर्णामर्थाः सफलनिर्देशं व्याख्येयाः । १०

२ पुत्रजग्धी । गुरावुत्कः, स्थूलौतुः, सुश्लोकेति, कुण्ठितः, पुंख्यानम्, एषु यथेच्छञ्चतुरः संसाध्य मातुः कृपेत्यत्र षत्वङ्कुतो नेति विचार्यताम् । १०

३ अहर्गणः, हरी रम्यः, अतितत्, माभिः, सुसखौ, वातप्रमी, स्वभ्रुवौ, ससूत्रनिर्देशं पञ्च प्रयोगान् संसाध्य नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थमित्यस्य वैशद्येनार्थः प्रकाश्यताम् । १०

४ प्रियतिसा, अजराणि, प्राराभ्यां, कमलषु, यज्वनः, अतियुष्मदोः, अमुमुयञ्चः, पिपठीः, आशीर्भिः, बेभिदी, यथारुचि पञ्च साधनीयाः । १०

५ उदेतोः, उष्णिहा, शर्वरी, दाक्षिणात्यिका, शुभंयिका, कात्यायनी, द्विविस्ता—केषाञ्चिच्चतुर्णामर्थनिर्देशं सिद्धिं च विलिख्य जातेः स्वरूपं सोदाहरणं स्फुटीक्रियताम् । १०

## १९५५

१ 'लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा' । इत्युक्तिः समर्थनीया ५

२ अवश्यलाव्यम्, गुरा उक्तः, प्रार्षभीयति, मनीषा, पटत्पटेति, गवाक्षः, सुश्लोकेति, सर्पिष्टमम्, उत्थानम्, पुंस्कोकिलः, वासः क्षौमम्, मातुः कृपा, गीः काम्यति, शम्भू राजते । एषु केऽपि दश प्रयोगाः साधनीयाः । १५

३ रामस्य, वर्णाश्रमेतराणाम्, माभ्याम्, द्व्यहनि, सुसखिना, उड्डुलोमान्,

सर्वासाम्, लिट्सु, अतिस्त्रियै, एषु पञ्च प्रयोगान् संसाध्य कथं तर्हि हा पितः क्वासि हे सुभ्रु ? इति ग्रन्थः सप्रपञ्चं समर्थनीयः। १०

४ अजरसम्, श्रीपाय, चतुर्णाम्, राज्ञः पन्थाः, तक्, अमुष्यै, विमलद्दिवी, एषु केवलं पञ्च प्रयोगान् संसाध्य, युष्मानस्मान् वातिक्रान्त इति विग्रहे रूपाणि लिखत। १२

५ पञ्चाजी, बहुधीवा, अखट्विका, गार्गी, पञ्चाश्वा, मनावी, द्विपुरुषी, अतिकेशी, औपगवी, गोपालिका, एषु अष्टौ प्रयोगाः साधनीयाः। ८

१९५६

१ शकारयकारयोराभ्यन्तरप्रयत्नमुल्लिख्य ह्रस्वाकारस्य प्रक्रियादशायां विवृतत्वे प्रमाणञ्चाभिधाय 'अचश्च' इतिपरिभाषायाः सोदाहरणमर्थं लिख १०

२ विष्णवे; तवल्कार; प्रार्च्छति; हरी एतौ; सुश्लोकेति; मामकी तनू इति; सञ्छम्भुः; कौतस्कुतः; धनुष्कपालम्; स उ एकाग्निः; गीःपतिः; सेमामविड्ढि प्रभृतिं य ईशिषे—एतेषु षण्णां साधुत्वमभिधाय 'स्थानादेशे न' इत्युक्तिः समर्थनीया। १०

३ रामाणाम्; निर्जरसे; पदः; सख्यौ; उडुलोमाः; नियाम्; क्रोष्टूनाम्; मत्याम्; उद्ना अत्र पञ्चानां साधुत्वमभिधाय—अतिस्त्रिशब्दस्य पुंसि सप्तस्वपि विभक्तिषु रूपाणि प्रदर्शय। १०

४ आभ्याम्; राज्ञः; मघवान्; प्रियाष्टनः; युष्माकम्, अमुना; अहोभ्याम्; बहूर्जि; अत्र षण्णां साधुत्वं सम्यगभिधाय 'उगिदचां सर्वनामस्थानेऽधातो'-रिति सूत्रस्याधातुग्रहणस्य फलं विवेचय। १०

५ भवती, कारिका, इत्वरी, कुमारी, कुण्डोध्नी, गोणी, उपाध्याया, इन्द्राणी, सुजघना, औपगवी, एतेषु पञ्चानां साधुत्वं विशेषसूत्रनिर्देशपुरस्सरमभिधाय पञ्चाजीत्यत्र टापः प्राप्तिं समुद्भाव्य निराकुरु। १०

१९५७

१ 'तुल्यास्यप्रयत्नं सवर्णम्' 'अचः परस्मिन् पूर्वविधौ' 'ईदूतौ च सप्तम्यर्थे' 'यरोऽनुनासिकेऽनुनासिको वा' 'ढ्लोपे पूर्वस्य दीर्घोऽणः' एतेषु यदृच्छया त्रयाणां सोदाहरणमर्थमुपवर्ण्य विश्वपामिरित्यत्र ढत्वाशङ्का निरसनीया। १०

२ लव्यम्; तवल्कारः; प्रार्षभीयति; किम्वुक्तम्; एतन्मुरारिः, वाग्घरिः, सञ्छम्भुः; संस्कर्ता, हरिस्फुरति; नमस्करोति, भोअच्युत; मनोरथः; अत्र पञ्चानां साधुत्वं विधेयम्। अथवा—उपैति, अमी ईशाः, उ इति, सन्त्सः, द्विष्करोति, सैष दाशरथी रामः, एतेषु त्रयाणामेव साधुत्वमभिधाय चतुर्मुख इत्यत्रऽनुनासिकः कथन्नेति समाधेहि ? १०

३ रामाय; वर्णाश्रमेतराणाम् ; मासा; हरौ; जरसाम् ; स्त्रीम् , दध्ना एषु त्रयाणां साधुत्वमभिधाय क्रोष्टुशब्दस्य रूपाणि लिख। १०

४ सर्वेषाम् , आभ्याम् , अष्टौ, अस्माकम् , रमायाम् , गवाक्षि,—एतेषु त्रयाणां साधुत्वं सम्यगभिधाय त्वामतिक्रान्त इति विग्रहे सप्तस्वपि विभक्तिष्वतियुष्मच्छब्दस्य रूपाणि लिख। १०

५ सर्विका, इत्वरी, कुण्डोध्नी, पत्नी, भाजी, अतिकेशी—एतेषु त्रयाणां स्त्रीप्रत्ययकार्यं प्रदर्श्य वक्ष्यमाणेत्यत्र ङीपः प्राप्तिं समुद्भाव्य समाधेहि। १०

१९५८

१ हलन्त्यमितिसूत्रावृत्तिहेतुस्पष्टीकरणपुरस्सरं त, च, ड, ब, य वर्णेषु कयोरपि द्वयोराभ्यन्तरप्रयत्नोल्लेखपूर्वकमलोऽन्त्यस्येति सूत्रार्थं सोदाहरणं लिखत। १०

२ कृष्णर्द्धिः, प्रैषः, गवाग्रम्, एतन्मुरारिः, उत्थानम्, शार्ङ्गिञ्जय, निष्प्रत्यूहम्, पुनारमते–एतेषु केषाञ्चित् पञ्चानां साधुत्वं प्रदर्शयत। १०

अथवा—जय्यम्, प्रार्च्छति, पटत्पटेति, तच्छिवः, पुंस्कोकिलः, धनुष्कपालम्, देवा नम्याः, एष विष्णुः—एतेषु पञ्चानां साधुत्वं साधयत।

३ रामान् , पूर्वे, दद्भ्याम् , सख्युः, क्रोष्टुः, निट्त्सु, प्रद्युना—एतेषु चतुर्णां साधुत्वं वक्तव्यम्। १०

४ विश्वौहः, राज्ञः, यूयम् , भवान् , अद्भ्यः, स्वाप्सु, नर्तकी, स्थली, यवनानी, नारी—एतेषु चतुर्णां साधुत्वं प्रदर्शयत। १०

५ अधस्तनीषु फक्किकासु कयोरपि द्वयोराशयं स्वसंस्कृतेन विशदं वर्णयत—( १ ) अचि किम् ? कुमारी शेते, ( २ ) टोः किम् ? सर्पिष्टमम्, ( ३ ) विधिः किम् ? स्त्री इयती, ( ४ ) पूर्वस्य किम् ? परस्य साभूत् कटुका, ( ५ ) उपसर्जनात् किम् ? शिखा। १०

१९५९

१ वृद्धिगुणसंज्ञयोर्विषयव्यवस्थार्थमावश्यकत्वे कथम् ऐऔजितिसूत्रारम्भस्य सावर्ण्याभावज्ञापकत्वमिति समाधाय म, थ, ट, प, र वर्णेषु कयोरपि द्वयोः बाह्यप्रयत्ना लेख्याः। ... १०

अथवा

नाज्झलावित्यत्राकारप्रश्लेषे फलं मानञ्च प्रदर्श्य "इको गुणवृद्धी" इति सूत्रं सोदाहरणं व्याख्येयम्।

२ दध्यत्र, अवश्यलाव्यम्, सुश्लोकेति, मामकीतनू इति, वाग्घरिः, सन्त्सः, सञ्छम्भुः, एतेषु त्रयाणामेव साधुत्वं विधाय "कथन्तर्हि मदोदग्राः ककुद्मन्तः" इत्याद्युक्तेराशयं विशदीकुरुत ? ... १०

अथवा

कृष्णर्द्धिः, उपाच्छर्ति, होतॄकारः, उत्थानम्, संस्कर्ता, चर्कित्रा-यस्व, आविष्कृतम्, शिवोऽर्च्यः, स उ एकाग्निः, धूर्पतिः, एतेषु पञ्चैव साधनीयाः ।

३ रामाय, हरौ, सख्युः, माभ्याम्, द्ध्यह्नि, गाम्, एतेषु त्रयाणां साधुत्वं विधाय क्रोष्टुशब्दस्य सर्वविभक्तिषु रूपाणि लिखत । ... १०

४ "जरसौ" इत्यत्र शीभावमाशङ्क्य परमतप्रदर्शनपूर्वकं दीक्षितोक्त-दिशा समाधाय च आत्ना, प्ररीणां, भ्रुनु, राज्ञः, प्रियपञ्चाम्, अस्माकम्, अमुमुईचा, षण्णाम्, एतेषु त्रयाणामेव साधुत्वं विधेयम् । ... १०

५ स्वाम्पि, बहुराज्ञी, अजिका, चिरण्टी, इन्द्राणी, ब्राह्मणी, एतेषु त्रयाणा-मेव साधुत्वं विधाय स्वाङ्गलक्षणं ग्रन्थकारोक्तं सोदाहरणं वक्तव्यम् । ... १०

१९६०

१ सवर्ण, सं[illegible], [illegible], ज्ञाविधायकानि सूत्राणि सोदाहरणानि लिखित्वा "अष्टाभ्य औश् इत्यादावादेः परस्येत्येतदपि" इति पङ्क्तेराशयं स्पष्टं प्रतिपादयत । ... १०

२ तवल्कारः, प्रार्षभीयति, शिवेहि, रामकृष्णावमू आसाते, सम्ब्रुम्भुः, कांस्कान्, मातुः कृपा, भो देवाः, एषु केचन पञ्चैव प्रयोगाः साधु साध्याः । ... १०

३ रामाणाम्, जरसौ, सखा, लून्युः, श्रीणाम्, हे वर्षाभु, ज्ञानानि, दध्ना, एषां केषाञ्चित् पञ्चानां सिद्धिः कार्या । ... १०

अथवा

सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेहेति पङ्क्तेराशयं प्रतिपाद्य पितराविस्यत्र दीर्घाभावे कारणं लिखत ।

४ अनड्वान्, यूनः, राज्ञः, अग्ने तेजस्विन्, तादृक्, विदुषः, अमूः, चेच्छिदि, विसृपः, एषु केचन पञ्चप्रयोगाः साधनीयाः । ... १०

अथवा

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदीत्यादि कारिकार्थः सोदा-हरणं स्फोरणीयः ।

५ निर्भस्त्रिका, अतिधीवरी, गार्गी, कन्या, सपत्नी, ब्रह्माणी, तटी, नारी, एतेषां पञ्चानामेव सिद्धिः साधु कार्या । ... १०

१९६१

१ प्रत्याहार, गुण, स्वरितसंज्ञाविधायकानि सूत्राणि विलिख्य, अकृतव्यूहाः पाणिनीया इति परिभाषाफलं वदत । ... १०

२ प्राच्छंति, गव्यूतिः, पतञ्जलिः, देवदत्त, किम्वुक्तम्, उत्थानम्, संस्कर्ता, रामस्थाता, देवायिह, एषु केचन पञ्चैव साधु समाधेयाः। ... १०

३ रामाः, सर्वेषाम्, सुसखिना, यूष्णः, सुद्यावौ, मत्यै, पुनर्भूणाम्, सुधीनि, भ्रीणाम्, एषु केषाञ्चित् पञ्चनामेव सिद्धिः कार्या। ... १०

अथवा

कथं तर्हि दुर्धियः वृश्चिकभिय इत्यादिपङ्क्तेराशयं सम्यक् प्रतिपाद्य, अद्ड् डतरादिभ्य इति सूत्रे अद्डादेशे डकाराकारयोः प्रयोजनं वदत।

४ चतुर्षु, मघवान्, अष्टौ, अतिमयि, प्राचा, सुवः, अमू, गवाक्षु, केचित् पञ्चैव प्रयोगाः साध्याः। ... १०

५ तत्र शालायाम्, सीमे, आसुरायणी, कुण्डी, शफोरूः, एषु त्रीन् प्रयोगान् संसाध्य शूद्रा चामहत्पूर्वा जातिरित्यत्रामहत्पूर्वग्रहणफलं प्रदर्शयत। ... १०

१९६२

१ ह्रस्व, यम, वृद्धि, संज्ञाविधायकानि प्रमाणानि लिखित्वा परनित्यान्तरङ्गेतिपरिभाषाफलं स्पष्टं प्रदर्शयत। ... १०

२ लव्यम्, प्रोचीयति, गवेन्द्रः, रामकृष्णावमू आसाते, तच्छिवः, नॄः पाहि, सर्पिष्कुण्डिका, शिवोऽर्च्यः—एतेषु केचन पञ्चैव प्रयोगाः साध्याः। ... १०

अथवा

चतुर्मुख इत्यत्र णत्वाभावं स्पष्टं प्रतिपाद्य, ढ्रलोपे पूर्वस्य दीर्घोऽण इति सूत्रस्थपूर्वग्रहणफलं लिखत।

३ सर्वेषाम्, सख्यौ, बहुश्रेयस्यै, धाता, निजूभिः, क्रोष्ट्री, हन्दि, एषां केषांचित् पञ्चानामेव साधनं साधु कार्यम्। ... १०

४ विश्वौहः, मघोनः, ऋत्विक्, प्राचः, पुमान्, अमुना, अमूषाम्, स्रग्वीणि, एषु केचित् पञ्चैव साधनीयाः। ... १०

५ अधिहरि, गार्गी, एनी, कठी, पञ्चाजी, एतान् साधयत। ... १०



मुद्रकः—विद्याविलास प्रेस, वाराणसी। सं० २०२०

## मध्यमा परीक्षोपयोगी ग्रन्थाः—

कारिकावली-मुक्तावली—'मयूख' संस्कृत-हिन्दी टीका प्रत्यक्षखण्ड १-२५
कुमारसंभव—'पुंसवनी' संस्कृत-हिन्दी टीका, परीक्षोपयोगी १-५ सर्ग २-५०
अभिज्ञानशाकुन्तल—प्रो० कान्तानाथ शास्त्री एम. ए. सम्पादित नोट्स,
शाकुन्तलसमीक्षा आदि से सुसज्जित 'किशोरकेलि' संस्कृत-हिन्दी टीका ६-००
छन्दोमञ्जरी—प्रभा-रुचिरा संस्कृत-हिन्दी व्याख्या २-००
तर्कसंग्रह—न्यायबोधिनी, पदकृत्य, विरला, 'इन्दुमती' संस्कृत-हिन्दी टीका १-००
रघुवंश—मल्लिनाथी-सुधा संस्कृत-हिन्दी टीका सहित। सर्ग १ तथा ५ १-५०
द्वि० सर्ग ०-७५ १-२ सर्ग १-५० २-३ सर्ग १-५०
२-४ सर्ग २-२५ १-५ सर्ग ३-००
किरात—परीक्षोपयोगी 'सुधा' संस्कृत-हिन्दी टीका सहित १-२ सर्ग १-२५
संस्कृत रचनाप्रकाश—प्रो० रमाकान्त द्विवेदी। मध्यमा परीक्षा
निर्धारित अनुवाद का पाठ्य स्वीकृत ग्रन्थ १-९५
मेघदूत—सञ्जीवनी-चारित्रवर्द्धिनी भावबोधिनी सौदामिनी व्याख्या-
चतुष्टयोपेत परीक्षोपयोगी सर्वोत्तम संस्करण १-२५
चन्द्रालोक—पौर्णमासी कथाभट्टी संस्कृत-हिन्दी व्याख्या सहित ३-००
काव्यमीमांसा—मधुसूदनमिश्रकृत संस्कृत-हिन्दी व्याख्या १-५ अध्याय १-००
सम्पूर्ण ४-००
मध्यकौमुदी—सुधा-इन्दुमती संस्कृत-हिन्दी टीका, नोट्स सहित ५-००
भट्टिकाव्य—चन्द्रकला-विद्योतिनी संस्कृत-हिन्दी व्याख्या परिशिष्ट सहित
१ से ११ सर्ग ७-०० १२ से २२ सर्ग ५-००
दशकुमार—'बालबोधिनी' संस्कृत-हिन्दी टीका, अपहारवर्मचरितान्त ३-००
पूर्वपीठिका १-२५, पूर्वपीठिका, प्रथम-अष्टम उच्छ्वास २-०० सम्पूर्ण ५-५०
अलङ्कारसारमञ्जरी—मध्यमानिर्धारित १६ अलङ्कारों का पाठ्य ग्रन्थ ०-४५
व्युत्पत्तिप्रदर्शन-गूढाशुद्धिप्रदर्शन—नवीन परिष्कृत संस्करण ०-५०
प्रबन्धपारिजात—मध्यमा परीक्षा निर्धारित संस्कृत निबन्ध ग्रन्थ १-५०
भारतीयव्रतोत्सव—आचार्य पुरुषोत्तमशर्मा चतुर्वेदी ३-००
महाकवियों की अमर रचनाएँ—चक्रधर शर्मा २-००
जीवनदर्शन—डा० मुंशीराम शर्मा २-५०
संस्कृतकविदर्शन—डा० भोलाशंकर व्यास ६-००

प्राप्तिस्थानम्—चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१